ह्रीः

# दुर्लभ बौद्ध ग्रन्थ शोध पत्रिका

## 9

सम्पादक


प्रो० एस० रिनपोछे
योजना निदेशक

प्रो० व्रजवल्लभ द्विवेदी
उपनिदेशक



दुर्लभ बौद्ध ग्रन्थ शोध योजना
केन्द्रीय उच्च तिब्बती शिक्षा संस्थान
सारनाथ, वाराणसी

बुद्धाब्द २५३४ बुद्ध पूर्णिमा ख्रीस्ताब्द १९९०

# Dhīḥ

## A Review of rare buddhist texts

9

*Editors*


PROF. SAMDHONG RINPOCHE
Project Director

PROF. VRAJVALLABH DWIVEDI
Deputy Director






**RARE BUDDHIST TEXT RESEARCH PROJECT**

**Central Institute of Higher Tibetan Studies**

**SARNATH, VARANASI**

**B. E. 2534** **BUDDHA PŪRṆIMĀ** **C. E. 1990**

# धीः

## विषयानुक्रमणी





गुह्यकोकनदकर्णिकान्तरव्योमपञ्चकमहानभःस्थितम् ।
धर्मधातुतिलकाद्वयाद्वयं त्वां नमामि सहजात्महेरुकम् ॥

—वसन्ततिलकटीकातः

# श्रीचक्रसंवरस्तुतिः

[ ओरियण्टल इंस्टीटयूट, बड़ौदा से "संवरोदयतन्त्रपञ्जिका ( पद्मिनी )" ( संख्या 13160 ) की जो जीराक्स कापी आई है, उसी के अन्तिम पत्रों में ( 90-92 ) यह चक्रसंवरस्तुति लिखी हुई है, इसके आकर ग्रन्थ का उसमें कोई निर्देश नहीं है । ]

ॐ नमः श्रीचक्रसंवराय

श्रीहेरुकं महावीरं चक्रसंवरसंवरम् ।
नमामि मारजेतारं डाकिनीजालमा(ना)यकम् ॥ 1 ॥

वन्दे तां वज्रवाराहीं महारागानुरूपिणीम् ।
डाकिनीं च तथा लामां खण्डरोहां च रूपिणीम् ॥ 2 ॥

चत्वारो(त्वरेऽ)मृतभाण्डां च बोधिचित्तेन पूरिताम् ।
पुल्लीरमलयशिरसि प्रचण्डां वज्रडाकिनीम् ॥ 3 ॥

जालन्धरशिखां चैव चण्डाक्षीं गतकिल्विषाम् ।
ओडियानाह्वये सर्वे श्रोत्रे देवीं प्रभावतीम् ॥ 4 ॥

अर्बुदे पृष्ठवंशे तु महानासां नमाम्यहम् ।
गोदावरीं पुरे वामे कर्णे वीरमतीं शुभाम् ॥ 5 ॥

रामेश्वरीं भ्रुवोर्मध्ये खर्वरीं वरवर्णिनीम् ।
देवीकोट्टे स्थितां मैत्रे श्रीमल्लङ्केश्वरीप्रभाम् ॥ 6 ॥

मालवे स्कन्धदेशे तु द्रुमच्छायां नमाम्यहम् ।
कामरूपे कक्षद्वये देवीमैरावतीं शुभाम् ॥ 7 ॥

ओड्रे स्तनद्वये वापि श्रीमहाभैरवां सतीम् ।
त्रिशकुन्याह्वये नाभौ वायुवेगां मनोरमाम् ॥ 8 ॥

कोशले नासिकाग्रे वा सुराभक्षीं नमाम्यहम् ।
कलिङ्गे वदने रम्ये श्यामादेवीं सनातनीम् ॥ 9 ॥

लम्पाके कण्ठदेशे तु सुभद्रां वरसुन्दरीम् ।
काञ्चीप्रेतहृदये हयकर्णां मनोरमाम् ॥ 10 ॥

हिमालये पुरे मेढ्रे नमस्यामि खगाननाम् ।
प्रेतपुर्यां तथा लिङ्गे कौबेर्यां शस्यनीश्वरीम् ॥ 11 ॥

गृहदेवता गुदे स्थाने खण्डरोहां मनोहराम् ।
सौराष्ट्रे ऊरुयुगले शौण्डिनीं सुखदायिनीम् ॥ 12 ॥

सुवर्णद्वीपे जङ्घायां संस्थितां चक्रवर्मिणीम् ।
नगरे चाङ्गुलीस्थाने सुवीरां वरयोगिनीम् ॥ 13 ॥

सिन्धौ पादयोः पृष्ठे स्थितां देवीं महाबलाम् ।
मरौ चाङ्गुष्ठयुगले च संस्थितां चक्रवर्तिनीम् ॥ 14 ॥

कुलताजानुद्वये देवीं महावीर्यां नमाम्यहम् ।
खण्डकपालवीराद्यां स्वप्रज्ञाशिष्टविग्रहाम् ॥ 15 ॥

मम भक्त्या महावीरां कायवाक्चित्तचक्रगाम् ।
काकतुण्डीमुलूकास्यां श्वानास्यां शूकराननाम् ॥ 16 ॥

यमदाढीं यमदूतीं यमदंष्ट्रीं यमान्तिकाम् ।
एता देवीर्नमस्यामि दिग्विदिक्षु संस्थिता ताः) ॥ 17 ॥

वीरवीरेश्वरीनाथं हेरुकं परमेश्वरम् ।
स्तुत्वेदं देवतीचक्रं यन्मयोपार्जितं शुभम् ॥
तेन पुण्येन लोकोऽस्तु वज्रडाको जगद्गुरुः ॥ 18 ॥

॥ इति श्रीसंवरस्य स्तुतिः समाप्तेति ॥

# बुद्धगण्डीस्तवः

आचार्याश्वघोषकृतः

[ यह शान्तरक्षित ग्रन्थालय से प्राप्त 'धारण्यादिसंग्रह' ( सं० 5068 ) से लिया गया है। बिब्लोथिका बुद्धिका—XV., पेज 3–66 में गण्डीस्तोत्रगाथा नाम से मूल तिब्बती पाठ के साथ रोमन में 29 पद्य इसके प्रकाशित हैं, किन्तु धारणीसंग्रहस्थ मूल संस्कृत पाठ और इसके पाठ में पर्याप्त अन्तर है। अतः मूल को 'क' और प्रकाशित को 'ख' मानकर यहाँ दोनों से अपेक्षित पाठ ग्रहण कर शेष को टिप्पणी में पाठान्तर रूप में दिया गया है। इसे 'क' में अश्वघोष की कृति कहा गया है। ]

यः पूर्वं बोधिमूले रविगमनपथे[1] मारगान्नृत्यगीतान्[2]
गंगौ गंगौ गगंगौ घघनघनमृदुद्वन्द्वमन्त्रैरजस्रैः।
यः स्त्रीभिर्दिव्यरूपै[3]रुपरतरभितुं दूदुभिर्दूभिर्दूभिः
क्षोभं नैवाभियातः सुरनरनमितः पातु वः शाक्यसिंहः ॥ 1 ॥

यः कन्दर्पाङ्गनानां ककहकहकहा हाहहेति प्रहासै-
र्यः स्फीताडम्बराणां तटिति[4] तटतटा तातटीति प्रलापैः।
कुत्कुद् बुद्बुद् कुकूचित् कुकुहकुहकुहैः [5]किङ्कराणां च वाग्भि-
र्नो त्रस्तः सोऽस्तु सौम्यः श्रुतसकलमलः शान्तये वो मुनीन्द्रः ॥ 2 ॥

भ्रूक्षेपापाङ्गभङ्गैः[6] स्मरशरविलसत्पक्ष्मताराक्षिपातैः
प्रौढानङ्गाङ्गनानां ललितभुजलतालास्यलीलायिताङ्गैः[7]।
सव्रीडैः सस्मितोक्तैः कलमृदुमधुरामोदरम्यैर्वचोभि-
र्भ्रान्तं चेतो न [8]चित्रं स्मरबलजयिनो यस्य तस्मै नमोऽस्तु ॥ 3 ॥

उर्वी सञ्चालयन्तः खरशरनिकरै[9]श्छादयन्तोऽन्तरीक्षं
ज्वालाभिः क्रोधवह्नेर्ज्वलितदशदिशः क्षोभयन्तोऽम्बुराशिम्।

---

1. पथान्–ख.। 2. मारगागृङ्गगागृङ्गागृङ्गगागृङ् घघनघनघघृङ् बद्धसन्नद्धकक्षैः–ख.। 3. रूपैर्दुदुपति-दुदुभि–ख.। 4. तटितततटि–ख.। 5. किन्नराणां–क.। 6. भङ्गस्मर–ख। 7. लोलापदङ्गैः–ख.। 8. चित्रैः–ख.। 9. प्रच्छाद–ख.।

हेलोत्खातासिचक्रक्रकचपटुरवाराविणो[1] मारवीराः
मैत्रीशस्त्रेण येन प्रसभमभिजिताः पातु वः सो मुनीन्द्रः ॥ 4 ॥

विस्फूर्जज्जातकोपप्रकटितविकटाटोप[2]निर्घोषघोरं
गर्जज्जीमूतजालप्रकटगजघटाटोपबद्धान्धकारम् ।
[3]कन्दर्पोद्दामवह्निस्फुरदसिकिरणोद्भासिताशेषविश्वं
पुष्पेषोः सैन्यमुच्चैर्झटिति विघटितं येन बुद्धः स वोऽव्यात् ॥ 5 ॥

दिव्यैराकर्णपूरैः कमलदलनिभैः [4]पक्ष्मलैर्लोलतारै-
र्भावस्निग्धैर्विदग्धैः [5]प्रचलितललितैः सस्मितैर्भ्रूविलासैः ।
नेत्रैर्माराङ्गनानां परिगतवलयैर्लोहितान्तैरशान्तै-
र्नाकृष्टः सर्वथा यस्तमहमृषिवरं वान्तदोषं नमामि ॥ 6 ॥

नोद्भ्रान्तं यस्य चित्तं स्फुटविकट[6]सटान्तोत्कटैर्लोलजिह्वै-
र्मारैः शूलाग्रहस्तैर्गजतुरगमुखैः सिंहशार्दूलवक्त्रैः ।
प्रद्युम्नः कामदेवस्तृणवदगणितो येन [7]संरम्भभीरुः
संबुद्धः पातु युष्मान् व्यपगतकलुषो लोकनाथो मुनीन्द्रः ॥ 7 ॥

अक्षोभ्या यस्य बुद्धिर्धरणिनगनदीसागराम्भोधरद्भि-
र्गर्जद्भिर्मारवीरैर्विविध[8]मुखशतैर्घोररूपैरनन्तैः ।
येनासौ पुष्पकेतुस्तृणवदगणितः सर्वविद् वीतरागः
स श्रीमान् बुद्धवीरः कलुषभयहरः पातु वो वीतरागः ॥ 8 ॥

मारानीकैर्महोग्रै[9]रसिपरशुधनुःशक्तिशूलाग्रहस्तै-
रुल्कापातैरनेकैर्गहनपटुरवैर्भीषणैर्भीमनादैः ।
न क्षुब्धं यस्य चित्तं गिरिसममचलं गाढपर्यङ्कबन्धं
तं वन्दे वन्दनीयं त्रिभवभयहरं बुद्धवीरं प्रवीरम् ॥ 9 ॥

उच्चैरट्टाट्टहासैः प्रकटपटुभटाबद्धघण्टै रणद्भिः
साटोपास्फोटटङ्क[10]स्फुटजटिलजटैः [11]किङ्करैः कोटराक्षैः ।
भग्नं कर्तुं न शक्ताः पटुपटहपट[12]स्फालनैर्यस्य बोधौ
दृप्तानां गृध्रकूटे पटुपटहपटुः सोऽस्तु वो बुद्धवीरः ॥ 10 ॥

---

1. मोदिनो–क. । 2. स्फोट–ख. । 3. संदर्पो-ख. । 4. पक्ष्मलीलाविलोलैः–ख. । 5. प्रविकसित-सितैः–क. । 6. सटैः संकटैः-ख. । 7. संसारभीरुः–ख. । 8 शतमुखैः–ख. । 6. महौघै–ख. । 10. विकुटिलजटाः–क. । 11. किङ्कराः कोटराक्षाः–क. । 12. स्फोटनै–क. ।

कोकण्डं रामकण्डं प्रतिभयकुहरं [1]दर्पदर्पं रणाण्डं
डम्बं डम्बं डडिम्बं डुह डुहक डुहं [2]तृंखलस्तृंखलस्तृम् ।
झम्बं झिम्बं झझिम्बं खमु खमु खमुखं मंखु मंखुः खुमंखुर्
एभिर्ध्वानैर्न भीतः सुरवरनमितः पातु वः शाक्यसिंहः ॥ 11 ॥

यं मारा[3]ङ्गारधाराधरसमयसमारम्भसंरम्भयुक्तं
नक्तं माराङ्गनानां मुखकमल[4]वनश्रीविपक्षैकपक्षा ।
सम्यक्संबोधिलक्ष्मीः शशिनमिव शरत्कौमुदी संप्रपेदे
[5]तस्येयं धर्मदूती ध्वनति भगवतो धर्मराजस्य गण्डी ॥ 12 ॥

निघ्नन्नप्राप्तदृष्टिः[6] क्षणमपि [7]च चिरादन्तको यद् दुरन्तं
[8]तस्मिन्निक्षिप्तचित्ताः कुरुत सुचरितेष्वादरं सर्वकाले ।
इत्थं रत्नत्रयाज्ञामिव वदति मुहुः प्राणिनां यस्य सैषा-
[9]मेषा शब्दायमाना प्रथितमुखरदिङ्मण्डला धर्मगण्डी ॥ 13 ॥

[10]मार्तण्डमण्डलमिवोडुगणं विजित्य
भातीह तीर्थिकजनं जिनशासनं[11] च ।
रंरंम्यते धरणिमण्डलमण्डनस्य
गण्डी यमस्य जयडिण्डिमवत्प्रचण्डा ॥ 14 ॥

यस्यात्यन्तं दृढत्वं जमि जमि डुडुभं रञ्जितेनालिनालिं
डिम्बं डिम्बं डिडिम्बं डुभडुभडुडुभं नाडिवन्नाडिभण्डम् ।
रुण्डं रुण्डं रुरुण्डं यरलव खखुमं मंखुमंखुः खुमंखुः
पश्य त्वं जीवलोके दशबलबलिनः पीड्यते मारसैन्यम् ॥ 15 ॥

भूकम्पोत्कम्पजाता [12]प्रचलति वसुधा कम्पते मेरुराज
उत्त्रस्ता देवसंघा ग्रहगणसहिता[13] नागराजाः समस्ताः ।
श्रुत्वा गण्डीं प्रचण्डां विविधभयकरीं त्रासनीं तैर्थिकानां
बौद्धानां शान्तिहेतोः प्रतिरणति महीं [14]रावयन्तीव सद्यः ॥ 16 ॥

---

1. दर्पणाडं रणाडं–ख. । 2. स्त्रङ्गलस्त्रङ्गलस्त्रम्–ख. । 3. वारिधारा–क. । 4. कमलवरैयंत् सुविज्ञैकपक्षं–क. । 5. यस्येयं–क. । 6. तृप्तिः–ख. । 7. विचरत्यन्तको–ख. । 8. तन्निक्षिप्तान्यचित्ताः–ख. । 9. येषां–ख. । 10. मार्ताण्ड–ख. । 11. शासंश्चचारणति धरणिमण्डलस्य–क. । 12. प्रचरति ख. । 13. किरणा–ख. । 14. राधयन्ती–क. ।

एषा विहारशिखरे प्रविरौति गण्डी मेघस्वनेन कुरुते च मनोज्ञघोषान् ।
मातेव वत्सलतया सुबहिर्गतांश्च पुत्रान् समाह्वयति भोजनकालगण्डी ॥ 17 ॥

संसारचक्रपरिवर्तनतत्परस्य बुद्धस्य सर्वगुणरत्नविभूषितस्य ।
नादं करोति सुरदुन्दुभितुल्यघोषा[1] गण्डी समस्तदुरितानि निवारयन्ती ॥ 18 ॥

एषा हि गण्डी रणते [2]नराणां संबोधिनी [3]देवनरासुराणाम् ।
भद्राः शृणुध्वं सुगतस्य गण्डीमापूरितां भिक्षुगणैः[4] समग्रैः ॥ 19 ॥

नागैः संवर्तकालक्षुभितजलधराकारवद् व्योम्नि कीर्णैः
[5]क्वास्मिन् विध्वंसशङ्का भयचकितजनैस्तत्प्रतीकारहेतोः ।
[6]कुर्वन्त्यद्यापि यस्या ध्वनिमुपशमिताशेषतीर्थ्यावलेपं
सा गण्डी पातु युष्मान् सकलमुनिवरैः स्थापिता धर्मवृद्ध्यै ॥ 20 ॥

एषा सुरासुरमहोरगसत्कृतस्य शान्तिं परामुपगतस्य तथागतस्य ।
गण्डी रणत्यमरदुन्दुभितुल्यघोषान् कृत्वान्यतीर्थ्यहृदयानि विदारयन्ती ॥ 21 ॥

पुण्ये तत्परमानसा भवत भोः स्वर्गापवर्गप्रदे[7]
पापं दुर्गतिदायकं कुरुत मा लोकाश्चलं जीवितम् ।
इत्थं मध्यविलीनभृङ्गविरुतं[8] यत्नान्निवार्यं मया
मारारेश्चरणाम्बुयोर्विनिहितः पुष्पाञ्जलिः पातु वः ॥ 22 ॥

मुञ्चद्भिः कुसुमानि तूर्यरणितैरापूरयद्भिर्दिशो[9]
जोजोकारपुरःसरैः सुरगणैः शक्रादिभिः सादरैः ।
स्वर्गाद् यस्य भुवं किलावतरतो [10]दत्तानुयात्रा चिरं
तस्याव्यात् करुणानिधेर्भगवतो गण्डी प्रचण्डा जगत् ॥ 23 ॥

गत्वा सप्त पदानि मातुरुदरान्निष्क्रान्तमात्रः स्वयं
[11]संसारश्चवसं ममेति वचनं प्रोवाच योऽनन्यधीः ।
[12]यस्मिन्नात्मभुवे पुनस्त्रिभुवनं [13]भ्राजिष्ण्वभिव्याहृतं
कुर्याद्वः सुगतस्य [14]तस्य जयिनो गण्डी तमःखण्डिनी ॥ 24 ॥

---

1. मेघा–क. । 2. नगानां–ख. । 3. नागसुरा–क. । 4. शतैः–क. । 5. कश्मीरे–ख. । 6. इतः परं 22पद्यस्य प्रथमपादं यावन्नास्ति–क. । 7. नास्त्ययं पादः–क. । 8. रुतैर्जल्पन्नगापां गिरं–ख. । 9. नेभो–क. । 10. दत्तश्रिया चाचिरं–क. । 11. संसाराद्विरतिं करोम्यहमिति–ख. । 12. यस्यानल्पभवे बभूव वचनं–ख. । 13. गर्जिष्णुभिर्भाषितं–क. । 14. मार–क. ।

जित्वा मारबलं महाभयकरं कृत्वा च दोषक्षयं
सर्वज्ञं पदमाप यत् सुरुचिरं तत्रैव [1]रात्रौ बहिः।
[2]तस्याशेषगुणाकरस्य सुधियो बुद्धस्य शुद्धात्मनो
गण्डी खण्डितचण्डकिल्विषहरा भूयाद् विभूत्यै नृणाम् ॥ 25 ॥

ब्रह्मा जिह्म[3] इवाभवत् सुरगुरुर्गर्वं जहौ सर्वथा
शर्वः खर्वमतिर्बभूव भगवान् विष्णुश्च तूष्णीं स्थितः[4]।
इत्थं यद्गुणकीर्तनेषु विबुधा याता ह्रिया मूकतां
गण्डी तस्य मुनेरियं जयति वः पायादपायाज्जगत्[5] ॥ 26 ॥

[6]ब्रह्मादित्यशशाङ्कशङ्करशताक्षोपेन्द्रयक्षादयो
गन्धर्वोरगकिन्नरासुरसमीरप्रेतपीडाम्बराः ।
ये तिष्ठन्त्यमरा नरा क्षितितले पाताललोकेषु च
श्रोतुं धर्ममिमं तथागतगुरोः सर्वे समायान्तु ते ॥ 27 ॥

यस्या जन्मनि दीनहीनमतयः[7] प्रापुः शुचं[8] तीर्थिकाः
हर्षोत्कर्षविशेषवर्धितधियो बौद्धा धृतिं लेभिरे।
यामासाद्य गुणाः प्रयान्ति विततिं दोषा व्रजन्ति क्षयं
सा गण्डी कलिकालकल्मषहरा भूयाद्‌भ[9]वद्भूतये ॥ 28 ॥

यां नत्वा विधिवद् विशुद्धमतयो गच्छन्ति तुङ्गां गतिं
यस्याः क्षिप्रतरं प्रयान्ति विवशाः सर्वे विपक्षाः क्षयम् ।
ध्वस्तव्यस्तसमस्तमोहपटला सा धर्मगण्डी मुनेः
संभूयाद् भवभाविसाध्वसभिदे युष्माकमायुष्मताम् ॥ 29 ॥

श्रुत्वा यां पतिता महीतलमलं ब्रह्मादयः स्वर्भुवः
कम्पन्ते धरणीधराः क्षितिरपि क्षिप्रं गता क्ष्मातलम् ।
तीर्थ्यानां भयकारिणी परहितप्रारम्भशुद्धात्मनां
बौद्धानामुपशान्तये सपदि सा संताडयतां गण्डिका[10] ॥ 30 ॥

---

1. मारादिहन्–क । 2. तस्यादोषवतो गुणाकरधियो–क. । 3 मूर्ख–ख । 4. गतः–ख. । 5. जनान्–ख. । 6. पद्यमिदं नास्ति–ख. । 7. तनवः प्राप्ताः–क. । 8. श्रमं–क. । 9. भूयाद्विभूत्यै सदा–क. । 10. इतः परं नास्ति खमातृकायाम् ।

प्रौढालीढाभिरूढो गुरुतरचरणाक्रान्तगौरीस्तनाग्रं
सर्वज्ञस्योत्तराङ्गं स्फुटविकटशता गर्जयन् वज्रमुख्या ।
ज्वालामालोज्ज्वलाङ्गं त्रिभुवनविवरव्याप्तहुंकारभीमो
बद्धव्याबद्धमौलिर्जयति सुरनरादित्यचन्द्रासुरेन्द्राः ॥ 31 ॥

पीनोत्तुङ्गस्तनीनां हरिणदृशदृशां हंसलीलागतीनां
दं दं दं दं द दं दं तनि तनि तनितस्तालिका कामिनीनाम् ।
तुं तुं तुं तुं ततुं तुं नकटिनमभितो गीतितो गीतवाद्यैः
टुं टुं टुं टुं टुटुं टुं टुमिति मितनता हन्यते गण्डिकेयम् ॥ 32 ॥

इति बुद्धगण्डी समाप्ता ।

॥ कृतिरियमाचार्यश्री-अश्वघोषपादानाम् ॥

# दुर्लभ ग्रन्थ परिचय

—जनार्दन पाण्डेय—

[ 'धीः' के अंक 1 से 8 तक 5 संग्रहों सहित लगभग 200 ग्रन्थों का परिचय जो उपर्युक्त शीर्षक से दिया गया था, वह "दुर्लभ बौद्धग्रन्थ परिचय-प्रथम भाग" के रूप में पृथक् रूप से भी प्रकाशित हो चुका है। इस 9 वें अंक से द्वितीय भाग के लिये सामग्री प्रस्तुत की जा रही है। इस अंक में निम्नलिखित ग्रन्थों का परिचय दिया जा रहा है—

1. महाप्रत्यङ्गिरातन्त्र
2. संवरोदयपञ्जिका ( पद्मिनी )
3. वज्रवाराहीकल्प
4. आदिकर्मविधि ( आदिकर्मरचना )
5. चण्डमहारोषणतन्त्र
6. कल्पसंग्रह
7. कर्माधिकारविधान
   (क) हिरण्यमालादशक्रियाविधि
   (ख) वारिहिरण्यसप्तक
8. आश्चर्ययोगमाला
9. महाकालतन्त्र । ]

**1. महाप्रत्यङ्गिरातन्त्र**

**ग्रन्थ**—महाप्रत्यङ्गिरातन्त्र
**संख्या**—13252
**पत्रसंख्या**—1–78, **पंक्ति** प्र० प०–10, अक्षर प्र० पं०–45
**आधार**—नेपाली कागज, लिपि–देवनागरी
**पूर्ण** ।

**प्रारम्भ**

ॐ नमो भगवत्यै आर्यमहाप्रत्यङ्गिरायै । नमः श्रीसर्वबुद्धबोधिसत्त्वेभ्यः ।

श्रीसाहस्रप्रत्यङ्गिरां भगवतीं पञ्चादिबुद्धात्मिकां
साहस्राधिकमारभङ्गचतुरां साहस्रकोटीगणाम् ।

साहस्रायुतकोटिलोकनिचया बुद्धा लयन्ति क्षणे
साहस्राधिपतीश्वरीं प्रणमतां तां विश्वरूपां सदा ॥

एवं मया श्रुतमेकस्मिन् समये भगवान् देवपुत्रायस्त्रिशेषु विहरति स्म सुधर्मायां देवसभायां महता भिक्षुसंघेन सार्धं महता च बोधिसत्त्वसंघेन च शक्रेण देवानामिन्द्रेण सार्धम्। तत्र खलु भगवान् प्रज्ञप्त एवासने निषद्य उष्णीषव्यवलोकितं नाम समाधिं समापद्यते स्म। समनन्तरसमापन्नस्य भगवतोष्णीषमध्यादेतानि मन्त्रपदानि निश्चरन्ति स्म। नमो भगवते उष्णीषाय शुद्धविरजे विमले स्वाहा नमो भगवते अप्रतिहतोष्णीषाय नमो बुद्धाय नमो धर्माय नमः संघाय।

**अन्त**

तद्यथा। ॐ अनरे 2 अचरे 2 खखमे 2 विषदे 2 वैरे 2 सौम्ये 2 शान्ते 2 दान्ते 2 मम सर्वविद्याधिपतये। सर्वबुद्धाधिष्ठिते सर्वतथागतोष्णीषशितातपत्रे सर्वदुष्टचित्तान् हुं हुं फट् 2 स्वाहा। बुद्धयोगेन सर्वोपद्रवेषु त्रिजप्ताः कर्तव्याः। इदमवोचद् भगवान् सर्वबुद्धबोधिसत्त्वानां च सदेवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्या ये चान्ये ग्रहनक्षत्रमातृकागणपतयश्च सप्तमातरो यक्षिणीराक्षसादिपिशाचसहिताः समग्राः ससैन्याः सपरिवारा लोका भगवत ( तः ) श्रीवज्रसत्त्वस्य भाषितमभ्यनन्दन्निति।

**पुष्पिका**

इति सर्वतथागतोष्णीषशितातपत्रानामापराजितायां लंकारलोकायां महाप्रत्यङ्गिरायां धर्मोपदेशशास्त्रे सुपरिशुद्धधर्मकायज्ञानमूर्तिमनुत्तरधर्मदेशनाधिष्ठितः श्रीशाक्यमुनि-भाषितः परमार्थानाम महाप्रत्यङ्गिरामहाविद्याराज्ञीसपादलक्षादुद्धृतः समाप्तः ॥ ये धर्मा०।

साहस्रशीर्षां द्विसहस्रदोषां नियुतकोटिदशदिव्यनेत्राम्।
तथागतोष्णीषशितातपत्रां प्रत्यङ्गिरां तां प्रणतोऽस्मि नित्यम् ॥

**विवरण**

इस ग्रन्थ की प्रतिलिपि ( जीराक्स ) गायकवाड़ ओरियण्टल रिसर्च इंस्टीटच्यूट बड़ौदा से प्राप्त हुई है, जिसके आधार पर यह विवरण दिया जा रहा है।

**विषयनिर्देश**

इसमें वर्णित विषय अवान्तर पुष्पिकाओं से स्पष्ट हो जाते हैं, जो इस प्रकार हैं—

| | | | |
|---|---|---|---|
| 1. इति महाप्रत्यङ्गिरायां निरोधे धर्मज्ञानक्षान्तिः | | | ( पत्र 5 ) |
| ,, | ,, | निरोधधर्मज्ञानम् | ( पृ० 6 ) |
| ,, | ,, | निरोध इत्यन्वयज्ञानक्षान्तिः | ( पृ० 8 ) |
| ,, | ,, | निरोधेऽन्वयज्ञानम् | ( पृ० 8 ) |
| ,, | ,, | निरोधज्ञानभावाः | ( पृ० 9 ) |
| ,, | ,, | समाधिसंग्रहमूर्द्धधर्मस्यालम्बनाकारविशेषः | ( पृ० 10 ) |
| ,, | ,, | पूर्वाभिसमयाधिकारः | ( पृ० 25 ) |
| ,, | ,, | रक्षान्वयज्ञानम् | ( पृ० 31 ) |
| ,, | ,, | रूपादिसमयाधिकारः | ( पृ० 37 ) |
| ,, | ,, | अभिसमयाधिकारः | ( पृ० 38 ) |
| ,, | ,, | चक्षुराद्यधिष्ठानसमयाधिकारः | ( पृ० 39 ) |
| ,, | ,, | मण्डलाधिकारः | ( पृ० 39 ) |
| ,, | ,, | कर्मयोगाधिकारः | ( पृ० 40 ) |
| ,, | ,, | कायवाक्चित्तस्तम्भनाधिकारः | ( पृ० 42 ) |
| ,, | ,, | सर्वमारसैन्यताडनबन्धनाधिकारः | ( पृ० 42 ) |
| ,, | ,, | चक्रानुपूर्वाधिकारः | ( पृ० 43 ) |
| ,, | ,, | चक्रावलोकनोनामाधिकारः | ( पृ० 43 ) |
| ,, | ,, | आकर्षणाधिकारः | ( पृ० 45 ) |
| ,, | ,, | होमाधिकारः | ( पृ० 45 ) |
| ,, | ,, | भीमो नामाधिकारः | ( पृ० 46 ) |
| ,, | ,, | प्रेतसाधनाधिकारः | ( पृ० 47 ) |
| ,, | ,, | चर्यासमयसाधनो नामाधिकारः | ( पृ० 47 ) |
| ,, | ,, | सर्वापायिकविशेषोऽधिकारः | ( पृ० 48 ) |
| ,, | ,, | धर्माधिकारः | ( पृ० 54 ) |
| ,, | ,, | पुण्यसम्भारः | ( पृ० 61 ) |
| ,, | ,, | षट्किन्नरीसाधनविधिविस्तरो नाम ज्ञानसम्भारः | ( पृ० 73 ) |
| ,, | ,, | शाक्यमुनिभाषितपरमार्थो नाम महाप्रत्यङ्गिरामहाराज्ञीसपादलक्षादुद्धृतः समाप्तः । | ( पृ० 78 ) |

**विशेष**

यह अत्यन्त महत्त्वपूर्ण ग्रन्थ है। इसमें बौद्ध धर्म, दर्शन और साधना संबन्धी अनेक विषयों का समावेश है। पारिभाषिक शब्दों का विस्तार से विवेचन किया गया है।

120 समाधियों के नाम देकर किस समाधि का क्या उपयोग होता है, यह भी बता दिया गया है। साधनाविषयक ग्रन्थ होने पर भी इसे धर्मोपदेशशास्त्र कहा है, जो वास्तविक रूप में तथ्य है।

**2. संवरोदयतन्त्रपञ्जिका ( पद्मिनी )**

**ग्रन्थ** — संवरोदयतन्त्रपञ्जिका
**ग्रन्थकार**—महापण्डित भिक्षु श्रीरत्नरक्षितपाद
**संख्या** — 13160
**पत्रसंख्या**—1-9,2 × 2 **पंक्ति प्र० प०** — 11, **अक्षर प्र० पं०** —40
**आधार** – नेपाली कागज, **लिपि**-देवनागरी
**पूर्ण।**

**प्रारम्भ**

ॐ नमः श्रीसंवराय।

गम्भीरं जगदेकजीवननिधिं निःशेषरत्नोदयं
नानाश्चर्यशताश्रयं विबुधसन्दोहेन संसेवितम्।
लक्ष्म्या सामृतया समन्विततनुं साधुप्रसादास्पदं
सेवध्वं भुवि संवरोदयमहातन्त्रं पयोब्धी बुधाः॥

गुरुप्रसाददीपार्चिः प्रध्वस्तध्वान्तधीदृशा।
दृष्टाः कतिपये ह्यर्था लिख्यन्ते सांवरोदयाः॥

शक्त्या यद्यपि मादृशेन कथमप्यन्तः प्रवेशास्पदं
प्रारब्धा विवृतिस्तथापि कुशलाभ्यासोदया कान्तया।
शक्ताः केचन नैव चेत् तलपरिस्पर्शाय पाथोनिधे-
रिष्टार्थां किमु नाप्नुवन्ति विधिना तं गाहमानाः श्रियम्॥

इह खलु निरवधित्रैधातुकोट्टवीर्यया सम्यक्संबोधिमधिगम्य धर्मामृतेन यथा भव्यं जगत्सन्तर्पयामास भगवान्। सन्ति पुनः केचित् तत्कालासन्निहिता विनेयजनास्तान् प्रति धर्मसङ्गीतिरियं कृता।

**अन्त**

त्रिलक्षात्मकश्रीहेरुकाभिधानतन्त्रात् सकलतदर्थसंग्राहको विशेषेणात्र सहजानन्दप्रतिपादनादुत्तरतन्त्रो लघुतन्त्रो व्याख्यातन्त्रश्च सहजोदयकल्पतः श्रीसंवरोदयसंज्ञान्तरः समुद्धृतः पञ्चकषायकालोत्पन्नविनेयजनानुग्रहायेति।

शिष्याभ्यर्थनया श्रुतान्निगमतः प्रोक्तं न गर्वादिना
यद् दृष्टं तदिह क्षमस्व जननी श्रीवज्रवाराही मे।
जातान्धस्य निसर्गदुर्गमतया····· संस्थितस्यास्ति कः
सन्देहोऽपि जनं प्रति प्रति मुहुस्तेनोपरितं महर्षणं ? ॥

अपि शिशुजनतोक्तिष्वर्थकव्यस्तवर्णाऽ-
पि हि जनयति मातुर्मोदमेव प्रकामम्।
इति मनसि निधायैवेदमुक्त्वा यदाप्तं
कुशलमिह गदास्तां विश्वसम्बोधिसिद्ध्यै॥

किञ्च—

सिद्धाचार्यपरम्परागतसदाम्नायार्कसम्पर्कतोऽ-
त्राजन्मानसपद्मिनीपरिमलोद्गारोऽयमारोहतु ।
मोहाद्दीर्घमितस्ततश्च विकलविश्रान्तमुद्भ्रान्तकं
भव्यं दिन्दिरवृन्दचित्तमतुलानन्दाय मन्दायितम्॥

**पुष्पिका**

इति श्रीसंवरोदयमहातन्त्रराजस्य पद्मिनीनाम पञ्जिका समाप्ता।

। कृतिरियं श्रीमहापण्डितभिक्षुश्रीरत्नरक्षितपादानामिति ।

शुभसंवत् ७६२ वैशाखकृष्णामावास्यायां श्रीजयमुनिलिखितः संपूर्णतां यातः।

**विवरण**

इस ग्रन्थ की जीराक्स कापी ओरियण्टल इंस्टीटयूट, बड़ौदा से प्राप्त हुई है। जिसके आधार पर विवरण तैयार किया गया है। इसकी अवान्तर पुष्पिकाओं में विषय का निर्देश नहीं है, केवल "इति प्रथमपटलव्याख्या, इति द्वितीयपटलव्याख्या" आदि ही दिया है। मूल संवरोदय ग्रन्थ का दूसरा नाम हेरुकतन्त्र भी है, इस नाम से इसका विवरण 'धीः' अङ्क 8 पृष्ठ 29 में दिया जा चुका है। शान्तरक्षित ग्रन्थालय में भी इसकी कई मातृकाएँ उपलब्ध हैं और दुर्लभ बौद्ध ग्रन्थ शोधयोजना से शीघ्र ही इसके प्रकाशन के लिये सम्पादन कार्य चल रहा है।

**3. वज्रवाराहीकल्प**

**ग्रन्थ**—वज्रवाराहीकल्प
**संख्या**—ल० सं० 4/2488

**पत्र सं०—1-145, पंक्ति प्र० प०-14, अक्षर प्र० पं०-54**
**आधार**—नेपाली कागज, लिपि-नेवारी ( प्राचीन ), पूर्ण।

**प्रारम्भ**

ॐ नमः श्रीवज्रवाराह्यै।

भगवति दिग्वस्त्रा मुक्तकेशार्धपादे
दिनकरकरभासे मण्डितामण्डिताङ्गे।
निखिलभवनिहन्ता सिद्धिसंबोधिदात्री
प्रणमितजिनमाता वज्रवाराहिकल्पे॥

अथातो भगवतीनां वाराहीणां सदेवानां महेश्वरीणाम्—

महामन्त्र महागुह्य महामाया सुरेश्वरी।
त्रैलोक्यसहजस्तेषां त्रैलोक्यामृतदे पुनः॥
गुह्यकानामियं माता महामायेति विश्रुता।
त्रैलोक्यत्रासिनी विद्या प्रपेदे वं(तां) महेश्वरीम्॥
यया विज्ञातमात्रायां विद्यया साधकेश्वरी।
सदेवगन्धर्वगणान् स यक्षासुरमानुषान्॥

**अन्त**

इदं मन्त्रं प्रभूतं च न भूतो न भविष्यति।
वज्रवाराहिकल्पेदं स्फूलश्चाल्पस्तु भाषितः॥
मेरुरजःप्रमाणं च सर्वबुद्धैः सुभाषितम्।

इदमवोचद् भगवानात्तमानसः—

अनन्तापर्यन्ताश्चैव कलिकाले तु व्यन्तरे।
शाक्यसिंहेन तन्त्रं च कथिता योगपारगा॥
श्रोतारं स्वयमे शास्ता वक्तारं च परे जने।
सुभाषितं भाष्यमानं तन्मयश्च गतिर्भवेत्॥
मयापि सा गतिः प्राप्तं संगीतिकारकादिभिः।
भगवतो भाषितं च अत्यानन्दमिदं वचः॥

मुक्त्वा गच्छति पापैस्तु भवस्यास्य समानता।
इत्याह भगवान् स्वामी वज्रडाकी तथागतः॥
सर्ववीरेश्वरीयोगाद् वज्रसत्त्वः परं सुखम्।

### पुष्पिका

इति श्रीवज्रवाराहिकल्पे महातन्त्रराजे योगज्ञानवज्रवाराहोक्रियातत्त्वार्णवाशीतिवज्रवाराह्यादीमं नाम कल्पे पञ्च(अष्ट)त्रिशतिपटलं समाप्तम् ॥ ये धर्मा० ।

नेपालिकाब्दे ऋषिलोकवाहैर्युक्ते नभःपूर्णहिमांशुमूर्तौ।
शुक्ले दिनेऽसौ मुनिनामधेयो वारे हि कस्यां विपुलां लिलेख ॥

### विवरण

इस ग्रन्थ की माइक्रोफिल्म राष्ट्रीय अभिलेखागार काठमांडू नेपाल से के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में आई है, जिसकी जीराक्स कापी से यह विवरण दिया जा रहा है।

### विषयनिर्देश

इस ग्रन्थ के विषय इसकी अवान्तर पुष्पिकाओं से स्पष्ट हो जाते हैं, जो इस प्रकार हैं—

| | | | | |
|---|---|---|---|---|
| इति श्रीवज्रवाराहिकल्पे | | महातन्त्रराजे | वज्रवाराहीनामसंयुक्तोत्पत्तिः प्रथमः पटलः | ( पत्र 4 ) |
| ,, | ,, | ,, | यन्त्रचक्रोत्पत्तिर्द्वितीयः पटलः | ( ,, 8 ) |
| ,, | ,, | ,, | वाराहीसमयचक्रस्तृतीयः पटलः | ( ,, 10 ) |
| ,, | ,, | ,, | सृष्टिकारकयोगिनीचक्रश्चतुर्थः पटलः | ( ,, 13 ) |
| ,, | ,, | ,, | चन्द्रसूर्यादिज्ञानचक्रप्रयोगः पञ्चमः पटलः | ( ,, 17 ) |
| ,, | ,, | ,, | वज्रवाराहि-उत्पत्तियन्त्रचक्रमण्डलनाम षष्ठः पटलः | ( ,, 21 ) |
| ,, | ,, | ,, | वाराहि-उत्पत्तिलक्षणसुखसंचारकर्मतत्त्व-विधिः सप्तमः पटलः | ( ,, 25 ) |
| ,, | ,, | ,, | ह्राँ याँ योत्पत्तिलक्षणमन्त्रन्यासषट्चक्र-स्वभावलक्षणः पटलः अष्टमः | ( ,, 29 ) |
| ,, | ,, | ,, | ह्रें ह्रौं मोहिनी-उत्पत्तिक्रमप्रसरोनाम नवमः पटलः | ( ,, 34 ) |
| ,, | ,, | ,, | ह्रूँ ह्रूँ संचारिणीलक्षणविधिः पटलः नवमः ( दशमः ) | ( ,, 37 ) |

इति श्रीवज्रवाराहिकल्पे महातन्त्रराजे अध्यात्म-अग्निकुण्डे होमविधिप्रकरणं त्रयो-
(षड्)विंशतिः पटलः (पत्र 100)

" " " पद्मवेलाकर्मप्रसरौषधिप्रकरणनिर्देशः
चतुर्(सप्त)विंशतिः पटलः (" 104)

" " " हयग्रीवप्रकरणं रसायनो नाम पञ्च(अष्ट)-
विंशतिः पटलः (" 106)

" " " वारुणीनिर्देशपद्मनृत्येश्वरप्रकरणं नाम
षड्(एकोन)विंशतिः पटलः (" 109)

" " " होमविशुद्धिप्रतिष्ठालक्षणं नाम सप्तविंशतिः
(त्रिंशः) पटलः (" 113)

" " " तत्त्वनिर्देशमुद्रालक्षणविधिरष्टाविंशतिः
(एकत्रिंशः) पटलः (" 117)

" " " महानासालक्षणच्छोमतत्त्वलक्षणविधि-
नियमो नामोन(द्वा)त्रिंशतिः पटलः (" 120)

" " " प्रतिबिम्बमुद्राच्छोमस्वभावविधिलक्षणं
नाम त्रिंशतिः (त्रयस्त्रिंशः) पटलः (" 123)

" " " योगिनीनिर्देशमुद्रालक्षणयुक्तिविधिरेक-
(चतुस्)त्रिंशः पटलः (" 126)

" " " वल्युपहारचक्रपूजाविधिनिर्देशो द्वा-
(पञ्च)त्रिंशत्तमः पटलः (" 130)

" " " प्रज्ञालोकसाधनलक्षणविधिनिर्देशस्त्रयः-
(षट्)त्रिंशत्तमः पटलः (" 134)

" " " मन्त्रसाधनध्याननिर्देशविधिश्चतुः(सप्त)-
त्रिंशत्तम पटलः (" 138)

" " " यागज्ञानवज्रवाराहीक्रियातत्त्वार्णवानीति
वाराह्यादीनं नाम पञ्च(अष्ट)त्रिंशतिः पटलः (" 144)

**विशेष**

इस मातृका की पुष्पिकाओं में लिपिक के प्रमाद से पटलों की संख्या भ्रामक हो गई है।

दशम को नवम, पञ्चदश को दशम तथा द्वाविंशति को ऊनविंशति लिखने से अन्तिम पटल संख्या 35 हो गई है, जब कि 38 होनी चाहिये।

इसकी एक अन्य मातृका अभी गा० ओ० इन्स्टीट्यूट बड़ौदा से प्राप्त हुई है, जिसकी आगमसंख्या 13234, पत्र संख्या 143 और लिपि देवनागरी है। इसमें क्रम ठीक है।

इस ग्रन्थ में बहुत अधिक मात्रा में अपभ्रंश गाथाएँ दी गई, हैं जो लिपिक के प्रमाद से दुरूह सी लगती हैं। इनका शुद्धीकरण अपेक्षित है, जिससे ग्रन्थ महत्त्वपूर्ण होगा।

यद्यपि 'वज्रवाराहीकल्प' नाम से एक ग्रन्थ का विवरण 'धीः' अंक 1, पृष्ठ 29 में दिया जा चुका है, परन्तु वह इससे भिन्न एक लघु ग्रन्थ है, जिसमें ( सर्वार्थसाधकः ) यह विशेषण भी लगा है और साधनमाला पृ० 437 में भी प्रकाशित है।

इस ग्रन्थ के बीसवें पटल में वर्णित कायादि चक्रों का विवरण अत्यन्त मननीय है। विषयवस्तु और प्रतिपादनशैली इन दोनों दृष्टियों से ग्रन्थ का अपना विशिष्ट महत्त्व है।

**4. आदिकर्मविधि ( आदिकर्मरचना )**

**ग्रन्थ**—आदिकर्मविधि
**ग्रन्थकार**—तटकर गुप्त
**संख्या**—13256
**पत्र सं०**—1–23, **पंक्ति प्र० प०**–10, **अक्षर प्र० पं०**–42
**आधार**—कागज, लिपि-देवनागरी, अपूर्ण।

**प्रारम्भ**

[ पूर्वप्राचीनतालपत्रपुस्तके एकपत्राद् अष्टमपत्रं खण्डितम् ]

नमो बुद्धाय। [ पापदेशना ] ततो दक्षिणजानुमण्डलं भूमौ पातयित्वा कल्याणमित्रस्य हस्ते पुष्पं दत्त्वा त्रिरेवं प्रार्थयेत्। प्रयच्छ मे कल्याणमित्र रत्नत्रयस्य शरणम्। ततः कल्याणमित्रेणाध्यासयेन प्रयच्छामीति वक्तव्यम्। ततस्तु रत्नत्रयशरणार्थं ज्ञप्तिं पाठयेत्। प्रणामजानुपादाञ्जलिक्रमेण संवराप्रवचनपाठो ज्ञप्तिरभिधीयते।

**अन्त**

अत्रार्थे तैरप्युक्तमस्ति एकत्रान्नं न भुञ्जीत वृष्यति कुलस्य च भुक्त्वा माधवीवृत्त्यास्ते छादिकुलस्य च रजकादिदत्तपिण्डमादाय मुनिना स्वयं तत्पात्रदानपात्रं यः स कुलीनः प्रशस्यते। यद्यन्याश्रमं द्रष्टुमिच्छेत् तदा इदं गाथा द्वे (द्वयं) पठित्वा द्रष्टव्यम्।

आरभध्वं नि¨कात् मुह्यध्वं बुद्धशासने।
धुनीत मृत्युनः सैन्यं नटागारमिव कुञ्जरः॥
यो ह्यस्मिन् धर्मविनये अप्रमत्तश्चरिष्यति।
प्रहाय याति संसारं दुःखस्यान्तं करिष्यति॥

**पुष्पिका**

इत्यादिकर्मविधिः।

दिशतु शुभाकरगुप्तः सन्मोक्षं जगति जातकारुण्यः।
परमततिमिरनिराकृतिधीरः कोऽप्येष नरमिहिरः॥
तत(ट)करगुप्तेन कृता लोकद्वयसकलसुगतिसुखदात्री।
प्रज्ञाकरगुप्तचिरप्रणयवशादादिकर्मकृतिरचना ॥ शुभम् ॥

श्रेयोऽस्तु नेपालीयसंवत् 1049 मिति फाल्गुन कृष्ण पञ्चमि शुक्रवार एतद्दिने नेपालप्रदेशे अशोकमण्डपस्थाने सुरश्रीमहाविहाराभ्यन्तरस्थित वज्राचार्य धर्म्महर्षेण इदं आदिकर्मरचनानाम पुस्तकं पूर्वप्राचीनतालपत्रपुस्तकं दृष्ट्वा महता कष्टेन लिखितमिति।

**विवरण**

इस ग्रन्थ की जीराक्स कापी ओरियण्टल रिसर्च इंस्टीट्यूट बड़ौदा से उपलब्ध हुई है। प्रारम्भ के 8 पत्र आधारमातृका में ही खंडित हैं, ऐसा मातृका के प्रारम्भ में लिखा गया है। अतः ग्रन्थ अपूर्ण है।

**विषयनिर्देश**

यह क्रियातन्त्र का ग्रन्थ है, प्रारम्भ का अंश न होने से इसकी प्रक्रिया पापदेशना से प्रारम्भ है, उपासक संवरविधि, बोधिसत्त्वसंवरविधि, बोधिसत्त्वसंवरसमाशनविधि, शीलसमादान, पोषधानुशंससूत्रोक्तपोषधज्ञप्ति, पोषधग्रहणविधि, मनुष्यभाव में निस्पन्द-फल, चतुर्गाथा, बुद्धपूजाविधि, श्राद्धविधि आदि विषय एवं क्रियाएँ इसमें स्पष्ट रूप से समझाई गई हैं।

## 5. चण्डमहारोषणतन्त्र

**ग्रन्थ—चण्डमहारोषणतन्त्र**
**पत्र संख्या—1–55, पंक्ति प्र० प०—16, अक्षर प्र० पं०—38**
**आधार—नेपाली कागज, लिपि—देवनागरी, पूर्ण।**

**प्रारम्भ**

ॐ नम श्रीचण्डरोषणाय ॥

एवं मया श्रुतमेकस्मिन् समये भगवान् वज्रसत्त्वः सर्वतथागतकायवाक्चित्तहृदये वज्रधात्वीश्वरीभगे प्रविजहार, अनेकैश्च वज्रयोगिनीगणैः, तद्यथा च। श्वेताचलेन चतुर्वज्रयोगिनी, पीताचलेन वज्रयोगिन्या। रक्ताचलेन वज्रयोगिन्या। श्यामाचलेन वज्रयोगिन्या। रागवज्रया च वज्रयोगिन्या। ईर्ष्यावज्रया च वज्रयोगिन्या। एवं प्रमुखैर्योगिनीकोटिनियुतशतसहस्रैः। अथ भगवान् वज्रसत्त्वः कृष्णाचरसमाधिं समापद्येदमुदाजहार—

**अन्त**

एवं श्वेताचलादींश्च भावयेद् गाढयत्नतः।
बीजेनापि विना ध्यात्वा एकचित्तः समाहितः॥

पिबन् भुञ्जन् स्वपन् तिष्ठन् गच्छन् संचङ्क्रमन् अपि।
सर्वावस्थास्थितो योगी भावयेद् देवताकृतिम्॥

अथवा केवलं सौख्यं योगी द्वन्द्वेन नन्दिता।
तावद् विभावयेद् गाढं यावत् संस्फुटतां व्रजेत्॥
गते तु प्रस्फुटो योगी महामुद्रेण सिद्ध्यति।

**पुष्पिका**

इति श्रीनीलतन्त्रैकल्लवीराख्ये श्रीचण्डमहारोषणे देवीसाधनविधिः। श्रीमच्छेन्द्रनाथप्रकरणे पातालखण्डे पञ्चविंशतिमं पटलं संपूर्णमिति॥ ऋतुयुग्मखेन्दु( 1026 )युते नेपालिके सुवत्सरे मधुमासे परे पक्षे कामतिथिमन्दवासरे उहि ऋक्षे ऐन्द्रियोगे च। लिखितमिदं जीवरत्नेन नीलतंत्रविधानकम्। यदि शुद्धमशुद्धं वा शोधनीयं महद्बुधैः॥

**विवरण**

इस ग्रन्थ की कई मातृकाएँ शान्तरक्षित ग्रन्थालय में हैं। प्रस्तुत मातृका जिसके आधार पर विवरण तैयार किया गया है, डॉ० ठाकुरसेन नेगी के व्यक्तिगत संग्रह से उपलब्ध हुई है, जिसे उन्होंने नेपाल से जीराक्स करवाया है।

**विषयनिर्देश**

इसमें वर्णित विषयवस्तु इसकी अवान्तर पुष्पिकाओं से स्पष्ट हो जाती है, जो इस प्रकार हैं—

| | | | | |
|---|---|---|---|---|
| 1. इति श्रीनीलतन्त्रे | कल्लवीराख्ये | चण्डमहारोषणतन्त्रराजे | तन्त्रावतारः प्रथमपटलः | ( पत्र 2 ) |
| ,, | ,, | ,, | [ मण्डलमानादि ] द्वितीय पटलः | ( ,, 4 ) |
| ,, | ,, | ,, | प्रज्ञाभिषेकस्तृतीयः पटलः | ( ,, 7 ) |
| ,, | ,, | ,, | देवतापटलश्चतुर्थः | ( ,, 9 ) |
| ,, | ,, | ,, | मन्त्रपटलः पञ्चमः | ( ,, 11 ) |
| ,, | ,, | ,, | निष्पन्नयोगः षष्ठपटलः | ( ,, 16 ) |
| ,, | ,, | ,, | देहप्रीणनः सप्तमः पटलः | ( ,, 17 ) |
| ,, | ,, | ,, | स्वरूपविधिरष्टमः पटलः | ( ,, 19 ) |
| ,, | ,, | ,, | ध्यानविधिर्नवमः पटलः | ( ,, 21 ) |
| ,, | ,, | ,, | स्त्रीप्रशंसा दशमः पटलः | ( ,, 23 ) |
| ,, | ,, | ,, | विश्वदेवत्वमेकादशः पटलः | ( ,, 24 ) |
| ,, | ,, | ,, | सर्वमन्त्रकल्पो द्वादशः पटलः | ( ,, 29 ) |
| ,, | ,, | ,, | चर्याविधिस्त्रयोदशः पटलः | ( ,, 31 ) |
| ,, | ,, | ,, | अचलान्वये चतुर्दशः पटलः | ( ,, 32 ) |
| ,, | ,, | ,, | विशुद्धिः पञ्चदशः पटलः | ( ,, 34 ) |
| ,, | ,, | ,, | प्रतीत्यसमुत्पादः षोडशः पटलः | ( ,, 36 ) |
| ,, | ,, | ,, | शुक्रादिवृद्धिः सप्तदशः पटलः | ( ,, 39 ) |
| ,, | ,, | ,, | व्याधिवृद्धेत्युपहारोऽष्टादशः | ( ,, 41 ) |
| ,, | ,, | , | शुक्रस्तम्भनादि ऊनविंशः पटलः | ( ,, 44 ) |
| ,, | ,, | ,, | नानामन्त्रयन्त्रो विंशः पटलः | ( ,, 47 ) |
| ,, | ,, | ,, | कुतूहल एकविंशः पटलः | ( ,, 50 ) |
| ,, | ,, | ,, | वायुयोगो द्वाविंशः पटलः | ( ,, 52 ) |
| ,, | ,, | ,, | मृत्युलक्षणस्त्रयोविंशः पटलः | ( ,, 53 ) |
| ,, | ,, | ,, | देहस्वरूपश्चतुर्विंशः पटलः | ( ,, 53 ) |
| ,, | ,, | ,, | [ प्रज्ञापारमितोदय ] पञ्चविंशः पटलः | ( ,, 55 ) |

**विशेष**

इस ग्रन्थ के 1 से 8 पटल अमेरिकन ओरिएण्टल सोसाइटी न्यूहेवन कनैक्टिकट से रोमन लिपि में प्रकाशित हैं।

**6. कल्पसंग्रहः**

**ग्रन्थ—कल्पसंग्रह**

**पत्र संख्या**—16-8, **पंक्ति प्र० प०**-12, **अक्षर प्र० पं०**-40
**आधार**-नेपाली कागज, लिपि-नेवारी, पूर्ण।

**विवरण**

इस ग्रन्थ की जीराक्स कापी डॉ० ठाकुरसेन नेगी के व्यक्तिगत संग्रह से प्राप्त हुई है, जिसे उन्होंने श्री मनवज्र वज्राचार्य के संग्रह से प्राप्त किया है। इसमें पत्र 1 से 30 तक कुरुकुल्लाकल्प है, जिसका विवरण ताराकल्प नाम से 'धीः' के अंक 7 पृष्ठ 20 में आ चुका है और पत्र 31 से 58 तक मारीचीकल्प है, इसका भी विवरण 'धीः' अंकः 8 पृष्ठ 28 में आ चुका है।

## 7. कर्माधिकारविधानम्

**ग्रन्थ**—कर्माधिकारविधान
**पत्र संख्या**—1-9, **पंक्ति प्र० प०**-18, **अक्षर प्र० पं०**-60
**आधार**—नेपाली कागज, लिपि नेवारी, पूर्ण।

**प्रारम्भ**

श्रीविघ्नहर्त्रे नमः।

त्रैलोक्योद्भवरूपनिर्मितमहामायोपमज्ञानवान्
वाग्वज्रान्वयधर्मधामधरणीसन्धारणान्तर्गवाक्।
कारुण्यामृतशीकरैर्भवगतौ दुःखार्तिसन्तापहा
श्रीमान् विश्वहितं करोतु भवतां सर्वार्थसम्पत्तये॥

श्रीवज्रधर्मस्य पदोक्तरेणुद्वत्स्यर्ण(?)जातोत्सवमानसेन।
कर्माधिकारो...... ...द्यारोच्यते शिष्यजनानुरोधात्॥

स्थापनं गुणदोषोक्तिर्जीर्णोद्धारो ध्वजोत्सवः।
वास्तुनागेष्टकारोपा वनेहारुत्थनागभूः॥

**अन्त**

सूत्रं तत्र निपातयेत् सुविधिना तुल्यीकृतं भूतलं
पञ्चाज्ञानमयं विशुद्धवलितं निर्ग्रन्थिनात्यूर्ध्वगम्।
स्थैर्यध्यानसमन्वितो वरगुरुर्नासाग्रमध्येक्षणं
घण्टामङ्गलगीतिशङ्खपटहैः सत्तूर्यवंशस्वनैः॥ इत्यादि।

**पुष्पिका**

**आचार्याधिकारः समाप्तः॥**

**विवरण**

इस ग्रन्थ की जीराक्स कापी डॉ० ठाकुरसेन नेगी के व्यक्तिगत संग्रह से प्राप्त हुई है, जिसे उन्होंने आशाकाजी सफू वज्राचार्य नेपाल के संग्रह से उपलब्ध किया है। इसी के आधार पर यह विवरण तैयार किया गया है। इसमें पत्र 1 से 9 तक यह ग्रन्थ है। इसके अतिरिक्त 9 से 14 तक दो ग्रन्थ और हैं, जिनका विवरण क. ख. करके आगे दिया गया है।

**विषयनिर्देश**

मूर्ति, मन्दिर, चैत्य, प्रतिमा आदि विषयक यह लघु ग्रन्थ अत्यन्त उपयोगी है और प्रायः शुद्ध है। इसमें निम्नांकित विषय दिये गये हैं—

1. स्थापनाधिकारः प्रथमः ( पत्र 2 )
2. प्रतिमादिगुणदोषाधिकारो द्वितीयः ( पत्र 4 )
3. जीर्णोद्धाराधिकारस्तृतीयः ( पत्र 4 )
4. ध्वजावरोपणाधिकारश्चतुर्थः ( पत्र 4 )
5. वास्तुनागसञ्चाराधिकारः पञ्चमः ( पत्र 5 )
6. इष्टकास्थापनाधिकारः षष्ठः ( पत्र 5 )
7. वनयात्राधिकारः सप्तमः ( पत्र 7 )
8. भूशल्यसूत्रनिमित्ताधिकारोऽष्टमः ( पत्र 9 )।

इसके अतिरिक्त इसमें जो दो ग्रन्थ और हैं, उनका विवरण इस प्रकार है—

**( क ) हिरण्यमालादशक्रियाविधिः**

**ग्रन्थ**—हिरण्यमालादशक्रियाविधि

**पत्रसंख्या**—3 ( 8–10 ), पूर्ण।

**प्रारम्भ**

अर्केन्दुनीलहिरहारितपुष्परागैरापूर्य हेममणिताम्रशिलादिशङ्खम्।
लाजाकुसुम्भफलिनीतिलगन्धपुष्पैः क्षीराम्बुभिः सुपरिपूर्णसदर्घपात्रम्॥

**अन्त**

होमाश्रितेन विधिना चरुमन्त्रसाध्यं
क्षीराद्यखण्डभवफाणितयुक्तशालिम्।
पञ्चामृतप्रतिम ……… सिद्धमन्त्रं
हेमादिपात्रनिहितं प्रतिपादनीयम्॥

**पुष्पिका**

समाप्ता हिरण्यमालादशक्रियाविधिः ।

**( ख ) वारिहिरण्यसप्तकम्**

**ग्रन्थ**—वारिहिरण्यसप्तकम्
**पत्र संख्या**—5 ( 10–14 )
**अपूर्ण**

**विवरण**

इस ग्रन्थ का उक्त नाम इसमें उपलब्ध नहीं है, किन्तु यही ग्रन्थ साधनसमुच्चय में इस नाम से प्राप्त है, जिसका विवरण 'धीः' अंक 6 पृष्ठ 14 में दिया गया है ।

**8. आश्चर्ययोगमालालघुवृत्तिः**

**ग्रन्थ**—आश्चर्ययोगमालालघुवृत्ति
**ग्रन्थकार**—गुणाकर पण्डित
**पत्र संख्या**—1–13, **पंक्ति प्र० प०**–14, **अक्षर प्र० पं०**–34
**आधार**—नेपाली कागज, लिपि-देवनागरी, पूर्ण ।

**प्रारम्भ**

श्रीगणेशाय नमः । अथ वश्याधिकारः ।
सितभानुविटपमूलं मञ्जिष्ठाभवनचटककुष्ठम् ।
स्वाङ्गक्षतभवदिग्धैस्त्रिभुवनमेभिर्वशीकुरुते ॥
तालं पिशाचभवने भूतेऽह्नि प्रेतवदनपर्युषितम् ।
रोगेन्द्रसंप्रयुक्तं त्रिभुवनवशकारकं [ भवति ] ॥

**अन्त**

गुरुमुखादिगतं शास्त्रान्तरे च यन्मया ज्ञातम् ।
अनुभवं ममाग्रे ……यत्किञ्चिदिह दृष्टम् ॥
आश्चर्ययोगमाला नागार्जुनविरचितानुऽभवप्रसिद्धा ।
… ….न हृदयदयिता समर्थिता सूत्रतो जयति ॥
आत्मस्मरणाय मया विक्रीता नागार्जुनप्रणीतेयम् ।
आश्चर्ययोगमाला अग्रे तव वृद्धटीकातः ॥

**पुष्पिका**

इति श्रीपण्डितगुणाकरविरचिता आश्चर्ययोगमालालघुवृत्तिः समाप्ता। शुभम्।

**विवरण**

यह लघुग्रन्थ भी डॉ० ठाकुरसेन नेगी के व्यक्तिगत संग्रह से प्राप्त हुआ है, जिसे उन्होंने आशाकाजी सफू वज्राचार्य के संग्रह से जीराक्स कराया है।

**विशेष**

इसमें वशीकरण, विद्वेषण, उच्चाटन, रूपदर्शन अन्तर्धान, चमत्कारप्रदर्शन, अग्निस्तम्भन, जलस्तम्भन, पिशाचीकरण, रोमशातन, देशान्तरगमन, विषप्रयोग, विषापहार, विषमज्वरापहार, अञ्जनविधि, गर्भस्तम्भ, गर्भमोक्ष, वृश्चिकविषापहार, अदृश्यीकरण आदि के आश्चर्यकारक प्रयोग दिये गये हैं। ग्रन्थकार ने नागार्जुन की आश्चर्ययोगमाला को आधार मानकर इसे लिखा बताया है। संभवतः ये नागार्जुन सुप्रसिद्ध आचार्य नागार्जुन से भिन्न हैं।

## 9. महाकालतन्त्रम्

**ग्रन्थ—महाकालतन्त्र**
**संख्या**—M B B 1-51
**पत्र संख्या—1-74, पंक्ति प्र० प०-10, अक्षर प्र० पं०-42**
**आधार**—नेपाली कागज, लिपि-नेवारी, पूर्ण।

**प्रारम्भ**

नमः श्री वज्रमहाकालाय।

एवं मया श्रुतमेकस्मिन् समये भगवान् देवीनां भगेषु यथा तथा विजहार, देव्याह—भगवन् भुवनेषु पतिताः सत्त्वाः। तेषां किमुपायं कर्तव्यम्। देव येन हि मोदयन्ति स्व(सू)पचाराः।

उत्पत्त्युत्पन्नयोगेषु येन त्वाधो भवेत् पुनः।
तत्ते[ऽहं] कथयिष्यामि शृणु देवि प्रयत्नतः॥

**अन्त**

एतदवितथहूँकाराधिष्ठितमेतत्सकलं प्रणम्यात्मानं क्षेत्रपालं द्विभुजं कर्तिकपालहस्तं प्रत्यालीढं देहस्थितकुर्कुलं वामहस्तफट्कारनादं विकटदंष्ट्रं नीलवर्णं त्रीणि लोचनं

पिङ्गोर्ध्वकेशं व्याघ्रचर्माजिनवसनं रुधिरं पिबन्तं द्वियोगिन्या समावेशितं भावयेत्।

### पुष्पिका

इति श्रीमहाकालतन्त्रराजे श्रीबुद्धभाषितं महाकालतन्त्रराजं समाप्तम्।

### विवरण

इस ग्रन्थ की माइक्रोफिश प्लेट इंडियन एडवांस स्टडी फार वर्ल्ड रिलीजन, न्यूयार्क से के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में उपलब्ध हुई है, जिसके आधार पर यह विवरण तैयार किया है।

### विषयनिर्देश

ग्रन्थ की विषयवस्तु प्रायः प्रत्येक पटल की अवान्तर पुष्पिकाओं से स्पष्ट है, जो इस प्रकार है—

| | | | |
|---|---|---|---|
| इति श्रीमहाकालतन्त्रे रा¨ | | तस्यार्थगमनपटलः प्रथमः | ( पत्र 4 ) |
| ,, | ,, | हुण्डीभिनयपटलव्याख्यानपटलो द्वितीयः | ( " 5 ) |
| ,, | ,, | समन्त्रपटलस्तृतीयः | ( " 9 ) |
| ,, | ,, | वज्राभिषेकपटलश्चतुर्थः | ( " 10 ) |
| ,, | ,, | रौद्रदेवताभिषेकपटलः पञ्चमः | ( " 10 ) |
| ,, | ,, | परिचर्यापटलः षष्ठः | ( " 12 ) |
| ,, | ,, | देवतास्थानपटलः सप्तमः | ( " 20 ) |
| ,, | ,, | छिद्रभूमिनिर्णयपटलोऽष्टमः | ( " 25 ) |
| ,, | ,, | राजदेवीपृच्छावादो नाम गुटिकापटलो नवमः | ( " 30 ) |
| ,, | ,, | पादुकपटलो दशमः | ( " 32 ) |
| ,, | ,, | राजदेवोप्रभामण्डितमेकादशः पटलः | ( " 33 ) |
| ,, | ,, | अञ्जनपटलो द्वादशः | ( " 35 ) |
| ,, | ,, | नहीं है। | |
| ,, | ,, | रससाधनपटलश्चतुर्दशः | ( " 39 ) |
| ,, | ,, | पञ्चदशः पटलः | ( " 52 ) |
| ,, | ,, | पटसाधनपटलः षोडशः | ( " 56 ) |
| ,, | ,, | वश्यपटलः सप्तदशः | ( " 58 ) |
| ,, | ,, | व्योहपटलोऽष्टादशः | ( " 58 ) |

# लुप्त बौद्ध-वचन संग्रह

—डॉ० बनारसी लाल—

[ इस शीर्षक के अन्तर्गत 'धोः' के पिछले अंकों में अनेक ग्रन्थों एवं ग्रन्थकारों के लुप्त-प्राय वचनों का संग्रह आवश्यक टिप्पणियों के साथ किया गया है। इन संगृहीत वचनों का 'लुप्त बौद्ध-वचन संग्रह' शीर्षक से अब पृथक् ग्रन्थ के रूप में भी प्रकाशन हो चुका है। धारणियाँ सूत्र एवं तन्त्र के मध्य एक महत्त्वपूर्ण कड़ी हैं। इसलिये इस अंक में शिक्षासमुच्चय में उद्धृत धारणियों, तथागतगुह्यसूत्र के वचनों तथा आर्यमञ्जुश्रीनामसंगीति की अमृत-कणिका टीका, खसमतन्त्र की टीका खसमा एवं क्रियासंग्रह में उद्धृत वचनों को संगृहीत किया गया है। ]

### अनन्तमुखनिर्हारधारणी

[1]ये केचित् सत्त्वा न भवन्ति विग्रहाः परिग्रहस्तत्र निदानमूलम् ।
तस्मात् त्यजेद्यत्र भवेत तृष्णा उत्सृष्टतृष्णस्य हि धारणी भवेत् ॥

### आदिबुद्ध

( १ )

[2]क्षरः क्षरः ( क्षरोऽक्षरः ) ततः स्पन्दो निःस्पन्दविमलोऽपरः ।

( २ )

[3]महासुखस्वभावोऽस्य पूर्णशब्देन गीयते ।
अन्यभावान्तरं सर्वं सृष्टिसंहारकारकम् ॥

### [4]कालचक्र

[5]निस्पन्दानन्दशुक्रं कुलिशमपि च तद् धारणाद् वज्रधृग्वै
बीजं कायस्य शुक्रं जिनजिगिति पिता नाभिचक्रे सुखं यत् ।

---

1. शि० स०, पृ० १४.
2. अ० क०, पृ० ३२५.
3. अ० क०, पृ० २२१.
4. कालचक्र तन्त्र में प्रस्तुत पद्यांश उपलब्ध नहीं होते ।
5. अ० कृ०, पृ० 198.

तल्लक्ष्यो लक्ष्यमानो( णो ) हृदि परमसुखं नाथ आरोलिगेव
तद् वेद्यं येन कण्ठे धृतमचलसुखं वेदको रत्नधृक् सः ॥

प्रज्ञाधृग् येन तन्त्रे शिरसि धृतमिदं शुक्रवैमल्यसौख्यम्
उष्णीषे ब्रह्मरन्ध्रेऽक्षरपरमसुखं षोडशानन्दपूर्णम् ।
या प्रज्ञा निःस्वभावा परमशशिकला षोडशी पूर्णिमान्ते
सानन्ता यस्य विद्या शिरसि स कुलिशे षष्ठमो वज्रसत्त्वः ॥

## गुह्येन्दुतिलक

[1]पंचबुद्धात्मकु सर्वजगोऽयं पश्यतु चित्रकु नाटकु दिव्यम् ।
यत्र हि एकु महासुखनामा नृत्यति एकु अनेक रसेन ॥

## [2]चतुर्मुद्रान्वय

[3]कुम्भो गुह्याभिषेकस्तु प्रज्ञाज्ञानाभिषेकतः ।
पुनरेव महामुद्रो तस्य ज्ञानाभिधानक. ॥

क्षरः( रोऽ )क्षरस्ततः स्पन्दो निस्पन्दश्च ततोऽपरः ।
कायवाक्चित्तसंशुद्धया अभिषेकत्रयं क्रमात् ॥

चतुर्थो ज्ञानसंशुद्धिः कायवाक्चित्तशोधकः ।
बालः प्रौढस्तथा वृद्धश्चतुर्थस्तु प्रजापतिः ॥

प्रज्ञास्तनाङ्गसंस्पर्शो बोधिचित्तच्युतं सुखम् ।
पयोधराभिषिक्तः स बालः प्रोक्तो यथासुखम् ॥

गुह्यस्फालाच्चिराज्ज्ञानां (ज्जातं) बोधिचित्तच्युतं सुखम् ।
प्रौढो गुह्याभिषिक्तः स गुह्यात् प्राप्तो यतः सुखम् ॥

गुह्यस्फालचिराज्जातं वज्राग्रे स्पन्दतः सुखम् ।
प्रज्ञाज्ञानाभिषिक्तः स वृद्धः स्पन्दं गतो यतः ॥

---

1. व० ति० टी०, पृ० 15. च० को० व्या०, पृ० 136 पर सूतक के वचन के रूप में पद्य का प्रारम्भिक अंश उद्धृत है ।

2. यह वचन चतुर्मुद्रान्वय नाम के ग्रन्थ के हो सकते है । टोका में—'चतुर्मुद्रान्वयग्रन्थस्तु पृथग्जनेन न कृत इत्यास्थेयमिति' उद्धृत है ।

3. अ० क०, पृ० 276-77.

महामुद्रानुरागाद् यज्जातं निस्पन्दतः सुखम् ।
महाप्रज्ञाभिषिक्तः स यतो निस्पन्दतां गतः ॥

प्रजापतिः स विज्ञेयो जनकः सर्वतायिनाम् ।
वज्रसत्त्वो महासत्त्वो बोधिसत्त्वोऽद्वयोऽक्षरः ॥

असौ समयसत्त्वः स्याद् वज्रयोगश्चतुर्विधः ।

## चतुर्मुद्रोपदेश

[1]कर्मज्ञानमहामुद्रासमयाख्याः प्रभास्वरः ।
हेतुर्भाव्या तथा प्राप्या चतुर्थोऽविनश्वरा ॥

## जाङ्गलीधारणी

[2]नमो रत्नत्रयाय । तद्यथा ॐ इलि मित्ते तिलि मित्ते इलि तिलि मित्ते दुम्बे दुम्बीलीये दुस्से दुस्सालीये, तर्क्क तर्क्करणे, कस्मीरे कस्मीरमुक्ते, अद्ये अद्यने, अघनाघने इलि, इलीय मिलीय, अशक्यायिये, अय्यायिये, श्वेत श्वेततुण्डे अन्तरक्षे स्वाहा । ॐ अशिजिह्वे शूलजिह्वे वज्रकाया ग्रस2 ज्वल2 महाज्वाले महायोगेश्वरी हूँ हूँ फट्2 स्वाहा इति जाङ्गुलिधारणी ।

## [3]डाकार्णव

[4]मुखं कुण्डं समाख्यातं रविचन्द्रपात्री श्रुवा ।
आचार्यश्चाद्वयं तत्र हुनाति संविद्रूपकम् ॥

अग्निर्विश्वमिदं डाकमन्त्रं प्रकृतिलक्षणम् ।
सिद्धा नाली समाख्याता शालिजं तन्दुलं यथा ॥

यद्वान्तं च सदा मेध्य आर्यं हि बोधिचित्तकम् ।
शोणितं माक्षिकं ज्ञेयं दूर्वा प्राणादिवायवः ॥

मूत्रपुरीषाभ्यां चैव चन्दनं च कस्तूरिका ।
रक्तपुष्पसदाख्यातं श्लेष्म खेटं च पायसम् ॥

---

1. अ० क०, पृ० 322.
2. क्रि० सं०, पृ० 96.
3. कलकत्ता संस्कृत सीरीज में एन० एन० चौधरी द्वारा सम्पादित डाकार्णव में केवल अपभ्रंश वचन हैं ।
4. व० ति० टी, पृ० 69.

इन्धनं नखदन्तास्थि चर्म वस्त्रं समासतः ।
केशरोमं तु देवाः स्युरग्निकुण्डस्य मध्यतः ॥

अन्यं सूक्ष्मविधं धातुं नानाव्रीहिकदाहुतिम् ।
पूर्णाहुतिं विजानीयात् क्रमान्निष्पत्तिडाकगाम् ॥

इन्द्रियं सर्वं नृत्यन्ति गायन्ति च तद्वासना ।
नानावाद्यमहानादं भोजनं करुणादिना ॥

महाबलं भाविता तु सर्वप्राणान्यधिपतिम् ।
तेन तुष्टो भवेत् सिद्धिः सर्वकर्मकं होमया ॥

मनसा क्रीडते तत्र सर्वलोकाग्रधातुषु ।
यस्मिन् काले भवेत् सौख्यं तस्मिन् काले प्रवर्तते ॥

शापानुग्रहकर्ता तु होमाध्यात्मिकदर्शनात् ।
लोकलोकोत्तरज्ञानलाभायान्तेषु मध्यमा ॥

वहत्येव महाचित्तं परमार्थं सर्वसन्धिषु ।
भक्षयित्वा तदोत्पन्नं वासनां बुद्धनिर्मिताम् ॥

लक्षालक्षप्रहाणेषु द्वाभ्यां तु ज्ञातुमर्हसि ।
लयश्च क्रियते तत्र माया हेमेषु लक्षणा ॥

## तथागतगुह्यसूत्र

( 1 )

[1]सर्वसत्त्वानां कायवाक्चित्तव्यवहारास्त्रिकुलं गुह्यम् ।

( 2 )

[2]कस्य भगवान् बोधिचित्तोत्पादः ? आह—यस्य महाराज अध्याशयोऽविकोपितः । आह—कस्य भगवन्नध्याशयोऽविकोपितः ? आह—यस्य महाराज महाकरुणोत्पादः । आह—कस्य भगवन् महाकरुणोत्पादः ? आह—यस्य महाराज सर्वपरित्यागः । आह—कथं भगवन् सत्त्वा अपरित्यक्ता भवन्ति ? आह—यदा महाराज आत्मसौख्यं परित्यक्तं भवतीति ।

---

1. व० ति० टी, पृ० 30.
2. शि० स०, पृ० 8.

( 3 )

[1]न खलु पुनः कुलपुत्र बोधिसत्त्वस्य वाग् रक्ता वा दुष्टा वा मूढा वा क्लिष्टा वा क्षुण्ण-व्याकरणा वा स्वपक्षोत्कर्षवचना वा, परपक्षनिग्रहवचना वा, आत्मवर्णानुनयवचना वा, परवर्णप्रतिघवचना वा, प्रतिज्ञोत्तारणवचना वा, अभिमानिकव्याकरणवचना वेति ।

( 4 )

[2]यानि च तानि महानगरेषु महाश्मशानानि भवन्त्यनेकप्राणिशतसहस्राकीर्णानि, तत्रापि स बोधिसत्त्वो महान्तमात्मभावं मृतं कालगतमुपदर्शयति । तत्र ते तिर्यग्योनिगताः सत्त्वा यावदर्थं मांसं परिभुज्य आयुःपर्यन्ते मृताः कालगताः सुगतौ स्वर्गलोके देवेषूपपद्यन्ते । स चैव तेषां हेतुर्भवति यावत्परिनिर्वाणाय, यदिदं तस्यैव बोधिसत्त्वस्य पूर्वप्रणिधानपरिशुद्धया । येन दीर्घरात्रमेवं प्रणिधानं कृतम्, ये मे मृतस्य कालगतस्य मांसं परिभुञ्जीरन्, स एव तेषां हेतुर्भवेत् स्वर्गोत्पत्तये यावत्परिनिर्वाणाय तस्य शीलवतः । ऋध्यति प्रार्थना । ऋध्यति प्रणिधानमिति ।

( 5 )

[3]स धर्मकायप्रभावितो दर्शनेनापि सत्त्वानामर्थं करोति । श्रवणेनापि स्पर्शनेनापि सत्त्वानामर्थं करोति । तद्यथापि नाम शान्तमते जीवकेन वैद्यराजेन सर्वं भैषज्यानि समुदानीय भैषज्यतरुसंहतिमयं दारिकारूपं [ कृतं ] प्रासादिकं दर्शनीयं सुकृतं सुनिष्ठितं सुपरिकर्म कृतम् । सा आगच्छति गच्छति तिष्ठति निषीदति शय्यां च कल्पयति । तत्र ये आगच्छन्त्यातुरा महात्मानो राजानो वा राजमात्रा वा श्रेष्ठिगृहपत्यमात्यकोट्टराजानो वा, तान् स जीवको वैद्यराजस्तया भैषज्यदारिकया सार्धं संयोजयति । तेषां समनन्तरसंयोगमापन्नानां सर्वव्याधयः प्रशम्यन्ते, अरोगाश्च भवन्ति सुखिनो निर्विकाराः । पश्य शान्तमते जीवकस्य वैद्यराजस्य लौकिकव्याधिचिकित्साज्ञानं यद्यन्येषां वैद्यानां संविद्यते । एवमेव शान्तमते तस्य धर्मकायप्रभावितस्य बोधिसत्त्वस्य यावन्तः सत्त्वाः स्त्रीपुरुषदारकदारिकारागद्वेषमोहसंतप्ताः कायं स्पृशन्ति, तेषां संस्पृष्टमात्राणां सर्वक्लेशाः प्रशम्यन्ते, विगतसंतापं च कायं संजानन्ति, यदिदं तस्यैव बोधिसत्त्वस्य पूर्वप्रणिधानसुपरिशुद्धत्वात् ।

( 6 )

[4]तद्यथापि नाम शान्तमते वृक्षस्य मूलच्छिन्नस्य सर्वशाखापत्रपलाशाः शुष्यन्ति, एवमेव शान्तमते सत्कायदृष्ट्युपशमात् सर्वक्लेशा उपशाम्यन्तीति ।

---

1. शि० स०, पृ० 71.
2. शि० स०, पृ० 89.
3. शि० स०, पृ० 89
4. शि० स०, पृ० 130.

( 7 )

[1]आर्यवज्रपाणेर्बलदर्शनविस्मिताजातशत्रुपृष्टेन भगवता—दशभिर्महाराज धर्मैः समन्वागतो बोधिसत्त्व एवंरूपां बलवत्तां प्रतिलभते। कतमैर्दशभिः? इह महाराज बोधिसत्त्वः कायं जीवितं च परित्यजति, न च पुनः सद्धर्मं परित्यजति। सर्वसत्त्वानां चावनमति, न च पुनर्मानं बृंहयति। दुर्बलानां च सत्त्वानामभयं ददाति। ग्लानानां च सत्त्वानां भूतचिकित्सार्थं उत्सुको भवति। दरिद्रांश्च सत्त्वान् भोगैः संतर्पयति। तथागतचैत्ये च सुधापिण्डलेपनं करोति। आनन्दवचनं सत्त्वानां श्रावयति। दरिद्रदुःखितानां च सत्त्वानां भोगसंविभागं करोति। श्रान्तक्लान्तानां च सत्त्वानां भारं वहति। एभिर्महाराज दशभिरिति।

( 8 )

[2]चत्वार इमे महाराज धर्मा महायानसंप्रस्थितानां विशेषगामितायै संवर्तन्तेऽपरिहाणाय च। कतमे चत्वारः? श्रद्धा महाराज विशेषगामितायै संवर्ततेऽपरिहाणाय। तत्र कतमा श्रद्धा? यया श्रद्धया आर्याननुपसंक्रामति, अकरणीयं च न करोति। गौरवं महाराज विशेषगामितायै संवर्तते। येन गौरवेण सुभाषितं शृणोति, शुश्रूषते अविरहितश्रोतश्च धर्मं शृणोति। निर्मानता महाराज विशेषगामितायै संवर्तते, यया निर्मानतया आर्याणामभिनमति, प्रणमति, नमस्यति। वीर्यं महाराज विशेषगामितायै संवर्ततेऽपरिहाणाय, येन वीर्येण कायलघुतां चित्तलघुतां च प्रतिलभते, सर्वकार्याणि चोत्तारयति। इमे महाराज चत्वार इति।

( 9 )

[3]सदाऽप्रमादो ह्यमृतस्य मूलं
सत्त्वार्थयुक्तस्य च बोधिचित्तम्।
यद्योनिशश्चैव विवेकचित्त-
मपरिग्रहः सर्वसुखस्य मूलम्॥

( 10 )

[4]तत्र कतमोऽप्रमादः? यदिन्द्रियसंवरः। स चक्षुषा रूपाणि दृष्ट्वा न निमित्तग्राही भवति, नानुव्यञ्जनग्राही। एवं यावन्मनसा धर्मान् विज्ञाय न निमित्तग्राही भवति, नानुव्यञ्जन-

1. शि० स०, पृ० 146.
2. शि० स०, पृ० 168.
3. शि० स०, पृ० 191.
4. शि० स०, पृ० 191.

ग्राही। सर्वधर्मेष्वास्वादं चादीनवं च निःशरणं च यथाभूतं प्रजानाति। अयमुच्यतेऽप्रमादः। पुनरपरम् अप्रमादो यत् स्वचित्तस्य दमनं परचित्तस्यारक्षा, क्लेशरतेरपरिकर्मणा, धर्मरतेरनुवर्तनम्. यावदयमुच्यतेऽप्रमादः। यस्य गुह्यकाधिपते श्रद्धा चाप्रमादश्च, तस्यानुलोमिकेन वीर्येण कार्यम्, येन तानप्रमादकारणान् श्रद्धाकारणांश्च धर्मान् समुदानयति। यस्य गुह्यकाधिपते श्रद्धा चाप्रमादश्च वीर्यं च, तेन स्मृतिसंप्रजन्ये योगः करणीयः, येन स्मृतिसम्प्रजन्येन सर्वान् बोधिपक्षान् धर्मान्न विप्रणाशयति। यस्य गुह्यकाधिपते श्रद्धा चाप्रमादश्च वीर्यं च स्मृतिसम्प्रजन्यं च तेन योनिशः प्रयोगे योगः करणीयः। योनिशः प्रयुक्तो हि गुह्यकाधिपते बोधिसत्त्वो यदस्ति तदस्तीति प्रजानाति, यन्नास्ति तन्नास्तीति प्रजानाति। यावदस्ति संवृत्या चक्षुरित्यादि।

## त्रिसमयराज

(1)

[1]नमः सर्वबुद्धबोधिसत्त्वानाम्। ॐ विरजि 2 महाचक्र विरजि। सत 2 सारत 2 त्रपि 2 विधमनि। सभजनि। संभजनि। तरमति। सिद्ध अग्रे त्वं स्वाहा॥

अनेन सर्वमण्डलप्रविष्टो भवति। अथवा तथागतहृदयमष्टसहस्रं जपेत्। स लौकिकलोकोत्तरमण्डलप्रविष्टो भवति। कतमच्च तत्? नमस्त्रैयध्विकानां तथागतानां सर्वत्राप्रतिहतावाप्तिधर्मताबलिनाम्। ॐ असमसम समन्ततोऽनन्तनावाप्तिशासनि। हर 2 स्मर स्मरण विगतरागबुद्धधर्मते! सर 2 समबला। हस 2। त्रय 2। गगन महाचलरक्षण। ज्वलज्वलन सागरे स्वाहा।

अयं सर्वतथागतानामात्मभावः। अत्रानुत्तरं गौरवं भावयितव्यम्। अनेन आदिकर्मिका अपि सत्त्वेष्वनन्तं बुद्धकृत्यं कुर्वन्ति।

अयमेव परमां रक्षां मारादिभ्यः सर्वदुष्टेभ्यः करोति। हस्तताडनेन भस्मना सर्षपैरुदकेन दृष्ट्या मनसा वा सीमाबन्धं करोति।

व्याधिषु भैषज्यमुदकं चाभिमन्त्र्योपयोज्यम्। वनकुसुमानि वा चैत्ये प्रतिमायां सद्धर्मपुस्तके वा समाहितो निवेदयेत्। पक्षप्रयोगान्महाव्याधिभिरपि मुच्यते बुद्धबोधिसत्त्वालम्बनेन सर्वसत्त्वार्थाभिलाषिणा च चित्तेन भद्रचरिविधिपूर्वकं च जप्तव्यः। अयं विधिरस्य कल्पस्यावसाने द्रष्टव्यः। त्रिसमयजापिनश्चाम्नायतो न दोषः। उच्छिष्टस्याप्यशुचेर्न दोषः। मुद्राकारा न भक्षणीया

1. शि० स०, पृ० 77.

न लङ्घनीया । न मञ्चरोहः कर्तव्यः । न मद्यं पातव्यम् । अधिमुक्तिचर्याशिक्षापदेष्वचलस्य निर्विचिकित्सस्य दुःशीलपूर्वस्यापि सिध्यति । पण्डितस्यापण्डितस्य वा नियतं सिध्यति ।

( 2 )

[1]अक्षिणी निमील्य बुद्धबोधिसत्त्वालम्बनचित्तः शताक्षरमष्टसहस्रं जपेत् । निमीलिताक्ष एव बुद्धबोधिसत्त्वान् पश्यति विगतपापो भवति । अथवा चैत्यं प्रदक्षिणीकुर्वन्नष्टसहस्रं जपेत्, चैत्यप्रतिमायाः सद्धर्मपुस्तकानां चैकतमं पुरस्कृत्यायमेव विधिरिति ।

( 3 )

[2]स्थलजा रत्नपर्वताः, जलजा रत्नपर्वताः, स्थलजानि रत्नानि दशदिगवस्थितानि, अमान्यपरिग्रहाणि देयानीत्युक्तम् । अनया च दिशा सर्वभैषज्यानि सर्वरसायनानि सर्वसलिलानि अनवद्यानि अप्पमण्डलानि सर्वकाञ्चनमण्डलानि । निवृत्तेषु वा लोकधातुषु ये परमरसस्पर्शन-संपन्ना भूपर्पटकाः, अमृतलताः, अकृष्टोप्ता वा शालयः, सर्वोत्तरकुरुद्वीपेषु परिशुद्धेषु च लोकधातुषु ये रमणीयतराः परिभोगाः ।

## [3]परमाद्य

[4]आकाशोत्पादचिह्नत्वादनादिनिधनः परः ।
सर्ववज्रमयः सत्त्वो वज्रसत्त्वः परं सुखम् ॥

## पुष्पकूटधारणी

[5]यश्च खलु पुनः सिंहविक्रीडिततथागतं सुमुखं वर्षं वा वर्षसहस्रं वा वर्षशतसहस्रं वा सर्वसुखोपधानैरुपतिष्ठेत, यश्च परिनिर्वृतस्य तथागतस्य चैत्ये बोधिचित्तसंगृहीत एकपुष्पमारोपयेत्, तथागतपूजायै जलाञ्जलिं चोपनामयेत्, जलेन वा सिञ्चयेत्, इषिकापदं वा दद्यात्, निर्माल्यं चापनयेत्, उपलेपनप्रदानं वा पुष्पप्रदानं वा दीपप्रदानं वा कुर्यादात्तमनाः, एक-क्रमव्यतिहारं वातिक्रम्य वाचं भाषते नमस्तस्मै बुद्धाय भगवत इतिमात्रे अत्र सिहविक्रीडित-कांक्षा वा कल्पशतं वा कल्पसहस्रं वा दुर्गतिविनिपातं गच्छेत्, नेदं स्थानं विद्यत इति ।

1. शि० स०, पृ० 96.
2. शि० स०, पृ० 153.
3. परमाद्य महायोगतन्त्र के वचन लु० बौ० व० सं०, पृ० 35 में संगृहीत किये गये हैं । यह इससे अभिन्न हो सकता है ।
4. खसमतन्त्रटीका, संकायपत्रिका–भा० 1, पृ० 235 सं० सं० वि० वि० ।
5. शि० स०, पृ० 96-97.

## बृहदादिबुद्ध

( 1 )

[1]गृध्रकूटे यथा शास्त्रा प्रज्ञापारमितानये।
तथा मन्त्रनये प्रोक्ता श्रीधान्ये धर्मदेशना॥

( 2 )

[2]धूमो मरीचिः खद्योतः दीपज्वालेतु( न्दु )भास्कराः।
तमः कला महाबिन्दुर्विश्वबिम्बं प्रभास्वरम्॥

## महायानरत्नराजसूत्र

[3]भगवान् वज्रपाणिरोड्डियानपर्वते निषण्णः सर्वांश्च वज्रयानशिक्षितानामन्त्रयामास। शृणुत निखिलवज्रयानशिक्षिताः! तथागतं परिनिर्वृत्तं न पश्यत शास्तारम्। अपि तु वज्राचार्यो वज्रगुरुः। सोऽयं शास्ता भवतीति।

## मूलतन्त्र

( 1 )

[4]कायवाक्चित्तधातूनां त्राणभूतो यतस्ततः।
मन्त्रार्थो मन्त्रशब्देन शून्यताज्ञानमक्षरम्॥
पुण्यज्ञानमयो मन्त्रः शून्यताकरुणात्मकः।

( 2 )

[5]शून्यभावसमूहोऽयं कल्पनारूपवर्जितः।
दृश्यते प्रतिसेनेव कुमार्या दर्पणे यथा॥
सर्वभावसमो भूत्वा एको भावोऽक्षरः स्थितः।
अक्षरज्ञानसंभूतो नोच्छेदो न च शाश्वतः॥

---

1. अ० क०, पृ० 177.
2. अ० क०, पृ० 194.
3. गु० स० प्र०, पृ० 216.
4. अ० क०, पृ० 314.
5. अ० क०, पृ० 329.

सर्वसंज्ञात्मका वर्णा अकारकुलसम्भवाः।
महाक्षरपदप्राप्ता न संज्ञा न च संज्ञिनः॥

अनुत्पन्नेषु धर्मेषु संस्काररहितेषु च।
न बोधिर्नैव बुद्धत्वं न सत्त्वो नैव जीवितम्॥

विज्ञानधर्मतातीता ज्ञानशुद्धा ह्यनाविलाः।
प्रकृतिप्रभास्वरा धर्मा धर्मधातुगतिं गताः॥

## रत्नोल्काधारणी

(1)

[1]दुर्लभ सत्त्व पृथग्जनकाया ये इमि श्रद्दधि ईदृशि धर्मान्।
येतु शुभोपचिताः कृतपुण्यास्ते इमि श्रद्दधि हेतुबलेन॥

यो दशक्षेत्ररजोपमसत्त्वान् कल्पमुपस्थिहि सर्वसुखेन।
नो ततु तादृशु पुण्यविशेषो यादृश श्रद्दधतो इति धर्मान्॥

(2)

[2]श्रद्धयमानु जिनान् जिनधर्मान् श्रद्धयते चरि बुद्धसुतानाम्।
बोधि अनुत्तर श्रद्धयमानो जायति चित्त महापुरुषाणाम्॥

श्रद्धपुरोगत मातृजनेत्री पालिक वर्धिक सर्वगुणानाम्।
काङ्क्षविनोदनि ओघप्रतारणि श्रद्धनिदर्शनि क्षमपुरस्य॥

श्रद्ध अनाविलचित्तप्रसादो मानविवर्जितगौरवमूला।
श्रद्धनिधानधनं चरणाग्रं पाणि यथा शुभसंग्रहमूलम्॥

श्रद्धप्रमोदकरी परित्यागे श्रद्ध प्रहर्षकरी जिनधर्मे।
श्रद्धविशेषकरी गुणज्ञाने देशिकप्रापणि बुद्धगतीये॥

इन्द्रियतीक्ष्णप्रभास्वरतायै श्रद्धबलं अविमर्दनतायै।
निश्रयक्लेश अधर्षिकतायै ऐषिक श्रद्ध स्वयंभुगुणानाम्॥

---

1. शि० स०, पृ० 6.

2. शि० स०, पृ० 4-6.

श्रद्ध असंगत सङ्गसुखेषु अक्षणवर्जित एकक्षणाग्रम् ।
श्रद्ध अतिक्रमसु मारपथस्य दर्शिक उत्तम मोक्षपथस्य ॥

बीजमपुतिकु हेतु गुणानां श्रद्ध विरोहणि बोधिद्रुमस्य ।
वर्धनि ज्ञानविशेषसुखानां श्रद्ध निदर्शिक सर्वजिनानाम् ॥

ये सद श्रद्ध सगौरव बुद्धे ते तु न शील न शिक्ष त्यजन्ति ।
ये तु न शील न शिक्ष त्यजन्ती ते गुणवां स्तुत ये गुणवन्तः ॥

ये सद श्रद्ध सगौरव धर्मे ते जिनधर्म अतृप्त शृणोन्ती ।
ये जिनधर्म अतृप्त शृणोन्ती तेष्वधिमुक्ति अचिन्तियधर्मे ॥

ये सद श्रद्ध सगौरव संघे ते अविवर्तिक संघप्रसन्नाः ।
ये अविवर्तिक संघप्रसन्नास्ते अविवर्तिक श्रद्धबलातः ॥

ये अविवर्तिक श्रद्धबलातो इन्द्रिय तीक्ष्ण प्रभास्वर तेषाम् ।
इन्द्रिय तीक्ष्ण प्रभास्वर येषां ते हि विवर्जितपापकमित्राः ॥

ये हि विवर्जितपापकमित्रा धार्मिकमित्रपरिग्रह तेषाम् ।
धार्मिकमित्रपरिग्रह येषां ते विपुलं कुशलोपचिनोन्ति ॥

ये विपुलं कुशलोपचिनोन्ती हेतुबलोपगताय महात्मा ।
हेतुबलोपगताय महात्मा तेषु उदारधिमुक्तिविशेषाः ।
येषु उदारधिमुक्तिविशेषास्ते सदधिष्ठितसर्वजिनेभिः ॥

ये सदधिष्ठित सर्वजिनेभिस्तेषु पपद्यति बोधयि चित्तम् ।
येषु पपद्यति बोधयि चित्तं ते अभियुक्त महर्षिगुणेषु ॥

ये अभियुक्त महर्षिगुणेषु जात ये बुद्धकुले अनुजाताः ।
जात ये बुद्धकुले अनुजातास्ते समयोग अयोगविमुक्ताः ॥

ये समयोग अयोगविमुक्ता आशयु तेषु प्रसादविशुद्धः ।
आशयु येषु प्रसादविशुद्धः तेषु अध्याशसु उत्तमश्रेष्ठः ॥

येषु अध्याशसु उत्तमश्रेष्ठास्ते सद पारमितासु चरन्ति ।
ये सद पारमितासु चरन्ती ते प्रतिपन्न इहो महायाने ॥

ये प्रतिपन्न इहो महायाने ते प्रतिपत्ति तु पूजयि बुद्धान् ।
ये प्रतिपत्ति तु पूजयि बुद्धान् तेषु अनुस्मृति बुद्ध अभेद्या ॥

येषु अनुस्मृति बुद्ध अभेद्या ते सद पश्यिय चिन्तिय बुद्धान् ।
ये सद पश्यिय चिन्तिय बुद्धान् तेषु न जातु न तिष्ठति बुद्धः ॥

येषु न जातु न तिष्ठति बुद्धस्तेषु न जातु रहायति धर्मः।
येषु न जातु रहायति धर्मस्ते सदधिष्ठित सर्वजिनेभिः॥

(3)

[1]इह भो जिनपुत्राः प्रथमचित्तोत्पादिको बोधिसत्त्वः आदित एव सर्वसत्त्वानामन्तिके दशप्रकारं चित्तमुत्पादयति। कतमद्दशप्रकारम्? तद्यथा-हितचित्ततां सुखचित्ततां दयाचित्ततां स्निग्धचित्ततां प्रियचित्ततां अनुग्रहचित्ततां आरक्षचित्ततां समचित्ततां आचार्यचित्ततां शास्तृचित्तताम्। इदं दशप्रकारं चित्तमुत्पादयतीति।

## रिगि-अरल्लिमहातन्त्र

[2]शुद्धोदनो महाराजा अरल्लिः प्रकाशितः।
रिगिस्तत्र महामाया प्रज्ञोपायात्मकं जगत्॥
वज्रसत्त्वस्तु सिद्धार्थः परमानन्दो महासुखः।

## वज्रपञ्जर

[3]सर्वधात्वन्तरालयेन

## वज्रशिखर(शेखर) [तन्त्र]

[4]ततः स्वाभाविकान् कायान् संभोगैर्विसृतः पुनः।

## वैरोचनाभिसम्बोधि[चर्यातन्त्र]

( 1 )

[5]इह बोधिसत्त्वः सर्वेण सर्वमदत्त्वा दानात् प्रतिविरतो भवति, अन्यत्र मत्सरिण इति।

---

1. शि० स०, पृ० 85.
2. अ० क०, पृ० 193.
3. व० ति० टी०, पृ० 18.
4. खसमतन्त्रटीका, संकायपत्रिका-भाग 1, पृ० 236, सं० सं० वि० वि०।
5. गु० स० प्र०, पृ० 81.

( 2 )

[1]कर्ममुद्रां समासाद्य धर्ममुद्रां विभावयेत् ।
तत्र (अत) ऊर्ध्वं महामुद्रा तस्याः समयसम्भवः ।।

## [2]समाज

[3]साध्यसाधनयोर्वज्रप्रवेश पर्यन्तमानन्दः ।
अत्यन्तचालनं बोधिचित्तापर्यन्तपरमानन्दः ।।

च्युतिर्विरमः अनयोर्मध्ये स्वसुखं शान्तं यदा भवति तदा सहजानन्दसाध्यमित्यर्थः ।

## [4]समाधिराजतन्त्र(सूत्र)

( 1 )

[5]बुद्ध भविष्यति सर्वजनोऽयं नास्ति ह कश्चिदभाजनसत्त्वः ।

( 2 )

[6]विवेकनिश्रितो विरागनिश्रितो निरोधनिश्रितो व्यवसर्गपरिणतश्च संस्कृतवस्तुवियोगा[ द् ] व्यवसर्गतत्प्रहाणे समन्वागत ऋद्धिपाद इति पञ्चाङ्गः । संपिण्ड्य विंशतिप्रकाराश्चत्वार ऋद्धिपादाः ।

## संवर[तन्त्र]

( 1 )

[7]सर्वयोगो हि भगवान् वज्रसत्त्वः ।

( 2 )

[8]एत एव हि सम्बुद्धा एकहेतुसमुद्भवाः ।
पूर्वकल्पे पुनर्जाता वासनाक्लेशहेतुतः ।।

---

1. अ० क०, पृ० 325.
2. समाज के नाम से उद्धृत ये वचन गुह्यसमाजतन्त्र में नहीं हैं ।
3. क्रि० सं०, पृ० 177.
4. ये वचन समाधिराज सूत्र में उपलब्ध नहीं होते ।
5. अ० वि० प्र० सि०, पृ० 215.
6. व० ति० टी०, पृ० 53-54.
7. गु० स० प्र०, पृ० 64 .
8. अ० प्र० वि० सि०, पृ० 215.

( 3 )

[1]सर्वाकाशावकाशे श्रीवज्रसत्त्वः प्रतिष्ठितः ।[2]

## सर्वरहस्यतन्त्र

( 1 )

[3]न किञ्चिद्धेतुतत्त्वं हि फलतत्त्वं तथैव च ।
तत्तत्त्वं तथताज्ञानं तत्र योगी समाचरेत् ।।

( 2 )

[4]सर्वस्वं सर्वबुद्धानां स्वचित्तं धर्मसंग्रहः ।
धर्मनैरात्म्ययोगेन मारयेद् म्रियते स्वयम् ।।

स्वचित्तमेव मर्तव्यं मारयेच्चित्तमेव च ।
स्वचित्तमेव संबुद्धो बोद्धव्यं चित्तमेव च ।।

•

1. गु० स० प्र०, पृ० 20.
2. ज्ञानसिद्धि, पृ० 153 पर भी यह अंश आया है ।
3. खसमतन्त्रटीका, संकायपत्रिका-भाग 1, पृ० 235, सं० सं० वि० वि० ।
4. अ० क०, पृ० 223.

# बौद्ध पारिभाषिक शब्दों का अभिप्राय

—ठिनलेराम शाशनी—

[ 'धीः' के पिछले आठ अंकों में लगभग 22 तन्त्र ग्रन्थों से विशिष्ट पारिभाषिक शब्दों की व्याख्याएँ "बौद्ध पारिभाषिक शब्दों का अभिप्राय" शीर्षक से संकलित की गई थीं, जो अब "बौद्ध तन्त्र कोश" ( भाग—1 ) नाम से ग्रन्थ रूप में प्रकाशित हो चुकी हैं। प्रस्तुत अंक में गुह्यसमाजतन्त्र तथा आचार्य रत्नाकरशान्ति विरचित खसमा नाम टीका से इस प्रकार की परिभाषाओं का संग्रह किया जा रहा है ]।

**अनुस्मृतिभावना**

बुद्धानुस्मृतिसम्बोध्योपस्थानस्मृतिभावना।
भावनाकायवाक्चित्तवज्रानुस्मृतिभावना॥
कुलानुस्मृतियोगेन क्रोधानुस्मृतिभावना।
समयानुस्मृतियोगाद् भावयन् बोधिमाप्नुयात्॥ ( गु० स०, 7.15-16 )

**अनुत्पादानुस्मृतिभावना**

प्रकृतिप्रभास्वरं सर्वं निर्णि(र्नि)मित्तं निरक्षरम्।
न द्वयं नाद्वयं शान्तं खसदृशं सुनिर्मलम्॥ ( गु० स०, 7.35 )

**कायानुस्मृतिभावना**

यत्कायं सर्वबुद्धानां पञ्चस्कन्धप्रपूरितम्।
बुद्धकायस्वभावेन ममापि तादृशं भवेत्॥ ( गु० स०, 7 28 )

**कुलानुस्मृतिभावना**

द्वयेन्द्रियसमापत्त्या बुद्धबिम्बं विभावयेत्।
रोमकूपाग्रविवरे कुलमेघान् स्फरेद् बुधः॥ ( गु० स०, 7.24 )

**क्रोधानुस्मृतिभावना**

द्वयेन्द्रियसमापत्त्या क्रोधेश्वरं विभावयेत्।
रोमकूपाग्रविवरे क्रोधमेघान् स्फरेद् बुधः॥ ( गु० स०, 7.25 )

**चित्तानुस्मृतिभावना**

यच्चित्तं समन्तभद्रस्य गुह्यकेन्द्रस्य धीमतः ।
ममापि तादृशं चित्तं तद्वद् वज्रधरोपमम् ।। ( गु० स०, 7.30 )

**द्वेषकुलपूजानुस्मृतिभावना**

द्वादशाब्दिकां संप्राप्य योषितं स्थिरचेतसम् ।
कुलयोगप्रभेदेन स्वशुक्रेण प्रपूजयेत् ॥ ( गु० स०, 8.36 )

**धर्मानुस्मृतिभावना**

द्वयेन्द्रियसमापत्त्या वज्रधर्मं विभावयेत् ।
रोमकूपाग्रविवरे धर्ममेघान् स्फरेद् बुधः ॥ ( गु० स०, 7.22 )

**प्रज्ञापारमितासमयानुस्मृतिभावना**

प्रकृतिप्रभास्वराः सर्वे अनुत्पन्ना निराश्रवाः ।
न बोधिर्नाभिसमयो न वान्तं न च सम्भवः ॥ ( गु० स० 7.34 )

**बुद्धानुस्मृतिभावना**

द्वयेन्द्रियसमापत्त्या बुद्धबिम्बं विभावयेत् ।
रोमकूपाग्रविवरे बुद्धमेघान् स्फरेद् बुधः ॥ ( गु० स०, 62.1 )

**मण्डलानुस्मृतिभावना**

द्वयेन्द्रियसमापत्त्या स्वरेतस्तु विचक्षणः ।
निःसारयेत् सदा योगी मण्डलान् मण्डलाकरान् ।। ( गु० स०, 7.27 )

**वज्रानुस्मृतिभावना**

द्वयेन्द्रियसमापत्त्या वज्रसत्त्वं विभावयेत् ।
रोमकूपाग्रविवरे वज्रमेघान् स्फरेद् बुधः ॥ ( गु० स०, 7.23 )

**वाचानुस्मृतिभावना**

यदेव वज्रधर्मस्य वाचो निर्युक्तिसम्पदः ।
ममापि तादृशो वाचो भवेद् धर्मधरोपमः ।। ( गु० स०, 7.29 )

**सत्त्वानुस्मृतिभावना**

यच्चित्तं सर्वसत्त्वानां कायवाक्चित्तलक्षितम् ।
ममापि तादृशं चित्तमाकाशसमसारिणम् ॥ ( गु० स०, 7.31 )

**समयानुस्मृतिभावना**

स्ववज्रं पद्मसंयुक्तं द्वयेन्द्रियप्रयोगतः ।
स्वरेतोबिन्दुभिर्बुद्धान् वज्रसत्त्वांश्च पूजयेत् ॥ ( गु० स०, 7.26 )
समयाक्षरेन्द्रविधिना विधिवत् फलकाङ्क्षिणः ।
मानयेत् तथागतं व्यूहं सुतरां सिद्धिमाप्नुयात् ॥ ( गु० स०, 7.33 )

**सर्वमन्त्रमूर्तिकायवाक्चित्तानुस्मृतिभावना**

यत्कायं मन्त्रवज्रस्य वाचा कायविभावनम् ।
ममापि तादृशं चित्तं भवेन्मन्त्रधरोपमम् ॥ ( गु० स० 7.32 )

**अभिषेकः**

अभिषेकं त्रिधा भेदमस्मिन् तन्त्रे प्रकल्पितम् ।
कलशाभिषेकं प्रथमं द्वितीयं गुह्याभिषेकतः ॥
प्रज्ञाज्ञानं तृतीयं च चतुर्थं तत्पुनस्तथा ।
मन्त्रयोग्यां विशालाक्षीं सपुष्पां शुक्रसम्भवाम् ॥ ( गु० स०, 18. 111-112 )

**अमोघजापः**

स्फरणं कायमेघेन बुद्धक्षेत्रात् समन्ततः ।
गमनागमनवज्रार्थममोघजापः स उच्यते ॥ ( गु० स०, 13. 17 )

**असमा ( देवता )**

अनन्तनिर्माणैर्जगदर्थकरणादसमा । ( ख० त० टी०, 240 )
उत्तरदले हरितवज्रबीजोद्भवा असमा मरकतवर्णा । ( ख० त० टी०, 245 )

**आदिबुद्धः**

आदिबुद्ध आकाशस्वभावः ।·····आदिबुद्ध इति वज्रधरः । ( ख० त० टी०, 234 )

**आमन्त्रणम्**

आमन्त्रणं सर्ववज्राणां सर्ववज्रनिमन्त्रणम् ॥ ( गु० स०, 18. 108 )

**आरोलिक्**

लक्ष्यलक्षणभावैस्तु सर्वं सर्वेण सर्वतः ।
रमणं लक्षणं लक्ष्यमारोलिगिति कथ्यते ॥ ( गु० स०, 18. 42 )

**आश्रयपरावृत्तिः**

आश्रयः शरीरं स तेषां त्रिविधः। ......... विशुद्धगगनोपमेन तु निष्प्रपञ्चेन प्रकाशात्मनाऽनन्तेन प्रवृत्तिनियमः परावृत्तिः। सा बुद्धानां दौष्ठुल्याश्रयपरावृत्तिः। सैव तेषामनास्रवो धातुरुच्यते, अनाश्रवाणां बुद्धधर्माणां बीजाधारत्वात्। सोऽपि मार्गस्तेषामाश्रयः। तस्य परावृत्तिलौकिकेन रूपेणात्यन्तिकी निवृत्तिः, लोकोत्तरेण चात्यन्तिकेन प्रवृत्तिः। सर्वधर्मतथतापि तेषामाश्रयः। तस्य परावृत्तिरागन्तुकसर्वावरणविशुद्धिरात्यन्तिकी। ( ख० त० टी०, 232 )

**उत्तम सेवा**

उत्तमं ज्ञानामृतेन च। ( गु० स०, 18. 136 )

**उपसाधनम्**

खमण्डलसमारूढं बोधिसंयोगभावनैः।
तच्चित्तं ज्ञानबिम्बेन भावनमुपसाधनम्॥ ( गु० स०, 18. 159 )
उपसाधनकाले तु बिम्बममृतकुण्डलम्। ( गु० स०, 18. 174 )
वज्रपद्मसमायोगमुपसाधनमुच्यते। ( गु० स०, 18. 178 )

**एकमनः**

भावनाचित्तेन सहितमेकाग्रमन एकमनः। ( ख० त० टी०, 249 )

**कामः**

कामं चित्तमिति प्रोक्तं रागद्वेषतमोऽन्वितम्। ( गु० स०, 18. 48 )

**कायजापः**

कायवज्राभिसम्बोधिं भावाभावविचारणम्।
बुद्धकाय इति प्रोक्तः कायजापः स उच्यते॥ ( गु० स०, 13.13 )

**क्रोधजापः**

शृणोति मन्त्राक्षरपदं स्ववज्रैर्घुष्टमण्डलम्।
क्रोधसमयज्ञानेन क्रोधजापः स उच्यते॥ ( गु० स०, 13.18 )

**क्रोधेन्द्राः**

टक्किराजादयः षट्काः क्रोधेन्द्रा इति विश्रुताः। ( गु० स०, 18.63 )

**खसमः**

बुद्धबोधिलक्षणो भगवान् वज्रधरः प्रकृत्या खसमः। प्रकृतिरस्य स्वाभाविकः कायः, तेन खसम एव, निराभासानन्तसुविशुद्धप्रकाशानां तथतास्वभावत्वात्। सांभोगिकेन यद्यप्याकारवैचित्र्याद्यथाकारो नैव खसमः, तथापि यथाप्रतिभासं खसम एव। धर्मकायो हि खसमेन तत्त्वेन धर्माननावृतोऽनुभवति संभोगकायस्तथैव परिच्छिनत्ति, अनुभवस्य निष्पन्दत्वात्। ......... संभोगकायोऽपि बुद्धानां यथाप्रतिभासं खसम एव। निर्माणकायस्तु सुतरां खसमः, मायाकार्यैरपि स्वयं निर्मितस्य पुरुषादेरसत्तयैव परिच्छेदात्। स च वज्रधरो जनकः सर्वबुद्धानाम्। तेऽपि खसमास्तन्निष्पन्दत्वादिति सिद्धान्तः। ( ख० त० टी०, 231–232 )।

भगवान् स्वयं च खसमः, खसमस्य च वज्रनयस्य प्रवर्तकः। ( ख० त० टी०, 233 )
आकाश इति खसमः धर्मकायलक्षणत्वात् खसमत्वेन प्रतिभासात्। (ख०त० टी०, 234)
खसमानामिति धर्मकायप्रकृतीनां बुद्धानां देवीनां च। ( ख० त० टी०, 241 )

**गुप्तम्**

गुप्तं गूढम्, चित्तवाग्गुह्यमित्यर्थः। ( ख० त० टी०, 243 )।

**गुह्यचतुष्टयम्**

कायगुह्यं चित्तगुह्यं वाग्गुह्यं कर्मगुह्यं च। ( ख० त० टी०, 239 )

**गुह्यम्**

त्रिविधं कायवाक्चित्तं गुह्यमित्यभिधीयते। ( गु० स०, 18.24 )
त्रिकुलं गुह्यमुच्यते। ( गु० स०, 18.36 )

**चतुःसमयपदम्**

वज्रज्ञानचक्रं चतुःसमयपदम्। समयचोदनं समयप्रेरणं समयमन्त्रणं समयबन्धनं चेति। ( गु० स० 16.97 )।

**चित्तजापः**

चित्तसमयसम्बोधिः स्थितिवज्रविचारणम्।
वज्रचित्तमिति प्रोक्तं चित्तजापः स उच्यते॥ ( गु० स०, 13.15 )

**चुन्दा ( देवी )**

भावानां सर्वधर्माणां यः स्वभावः प्रकृतिः शून्यता सा चुन्दा। ( ख०त०टी०, 250 )।

**चैत्यम्**

चैत्यं च सर्वबुद्धानामालयस्थानमुच्यते। ( गु० स०, 18.106 )

**चोदनम्**

चोदनं बोधनं प्रोक्तं कायवाक्चित्तभावतः। ( गु० स०, 18.107 )

**जपम्**

जपं तु सृष्टिसंहारं मन्त्रमुच्चार्य भेदतः।
विश्ववज्रात्मकान् बुद्धान् ज्ञानबीजेन संहरेत् ॥
बोधिनैरात्म्यबीजेन निरात्मां भावयेद् व्रती।
संस्फरेद् विश्ववद्विश्वं त्र्यध्वबीजेन तं जपेत् ॥
जपं जल्पनमाख्यातं............................ ।( गु० स०, 18.72-74 )

**जिनजिक्**

सदसन्मध्यमं ख्यातं भूतभौतिकसम्भवम्।
विग्रहः सर्वसत्त्वानां जिनजिग्जननं जिनः ॥ ( गु० स० 18.40 )

**ज्ञानचक्रम्**

ज्ञानसत्त्वेन यत्सृष्टं ज्ञानचक्रमिति स्मृतम्। ( गु० स० 18.106 )

**तत्त्वम्**

श्रीसर्वरहस्यतन्त्रेऽप्युक्तम्—

न किञ्चिद्धेतुतत्त्वं हि फलतत्त्वं तथैव च।
तत्तत्त्वं तथताज्ञानं तत्र योगी समाचरेत् ॥

हेतुतत्त्वं चित्तप्रतिवेधाश्चत्वार आकाराः, फलतत्त्वं पञ्चम आकारः, तदुभयमप्याकार-कमसत्, तथाज्ञानमेव तयोस्तत्तत्त्वम्, स्वाकाराणामसत्तया परिच्छेदात्। तत्र परिच्छेदे योगी चरेदित्यर्थः। श्रीसमाजेऽप्युक्तम्—

कायाक्षरमनुत्पन्नं वाक्चित्तमनलक्षणम्।
खवज्रकल्पनाभूतं मिथ्यासंग्रहसंग्रहम् ॥ ( गु० स०, 17.36 )

न क्षरतीत्यक्षरं गुह्यं कायगुह्यं वाग्गुह्यं चित्तगुह्यं तत्सर्वमनुत्पन्नमस्वभावं च प्रतिभासते, यथाकारमसत्तया परिच्छेदात्, खवज्रे धर्मकाये धर्मद्रवानुभूते कल्पनाभूतं परिच्छेदात्मकं खसमेन तत्त्वेन सत्तया यथाकारमसत्तया च परिच्छेदात्। मिथ्या च

तत् साकारत्वात्, संग्रहश्च तत्सम्यक् परिच्छेदात्, तेन संग्रहोऽस्येति तथोक्तम्, शुद्ध-लौकिकज्ञानसंगृहीतमित्यर्थः। ( ख० त० टी०, 235 )

तत्त्वं पञ्चकुलं प्रोक्तम्। ( गु० स०, 18.36 )

तत्त्वं चोदनभाषणम्। ( गु० स०, 18.74 )

**तन्त्रम्**

प्रबन्धं तन्त्रमाख्यातं तत् प्रबन्धं त्रिधा भवेत्।
आधारः प्रकृतिश्चैव असंहार्यप्रभेदतः॥

प्रकृतिश्चाकृतेर्हेतुरसंहार्यं फलं तथा।
आधारस्तदुपायश्च त्रिभिस्तन्त्रार्थसंग्रहः॥

पञ्चकं त्रिकुलं चैव स्वभावैकशतं कुलम्।
सहोक्तिबोधिवज्रस्य सोत्तरं तन्त्रमिष्यते॥ ( गु० स०, 18.33-35 )

**त्रिभुवनम्**

त्रीणि कायवाक्चित्तगुह्यानि योगिनां मण्डलसंगृहीतानि त्रिभुवनम्।
( ख० त० टी०, 233 )

त्रिभुवनं योगिनीचक्रम्। ( ख० त० टी०, 236 )

**त्रिवज्रम्**

सर्वमन्त्रार्थजापेषु त्रिवज्राभेद्यलक्षणम्।
त्रिभेदे वज्रपर्यन्तो न्यायोऽयं त्रिवज्रमुच्यते॥ ( गु० स०, 13 8 )

**द्वेषजापः**

द्वेषवज्रोद्भवं चित्तं कायवाक्चित्तसंस्थितम्।
सत्त्वान् द्वेषालये स्थाप्य द्वेषजापः स उच्यते॥ ( गु० स०, 13.21 )

**द्वेषः**

अन्योन्यघट्टनं तत्र द्वेष इत्यभिधीयते। ( गु० स०, 18.49 )

**धर्मकायः**

बुद्धानां दौष्ठुल्याश्रयस्य मार्गाश्रयस्य तथताश्रयस्य च परावृत्तिः, सैव तेषां बोधिः, सैव धर्मकायः। ( ख० त० टी०, 232 )

आदिशुद्धमादिशुद्धिर्धर्मकायः। ( ख० त० टी०, 235 )
सर्वबुद्धधर्माणां समरसीभावो धर्मकायः। ( ख० त० टी०, 236 )

**धर्मालोकः**

समरसीभूतः सर्वबुद्धानां धर्म एवालोकः, प्रकाशरूपत्वात्। ( ख० त० टी, 242 )

**नपुंसकः**

त्रिवज्रसमयं तत्त्वं मध्यमं समयवज्रिणम्।
तदेव सर्ववज्राणां जापो नपुंसक उच्यते॥ ( गु० स०, 13.22 )

**नयः**

नीयते व्याख्यायतेऽनेनेति नयः। येन भगवता नेयार्थसूत्रान्तो व्याख्यायते स नयः।
( ख० त० टी०, 235 )

**नित्यकायाः**

नित्यकायास्तथागता इति वचनाद् नित्या हि तथागतास्त्रिभिरपि कायैः प्रकृति-नित्यतयाऽनादिनिधनत्वात्, साम्भोगिकेनाशंसननित्यतया अनिधनत्वात्, नैर्माणिकेन प्रबन्धनित्यतया क्वचिद् विनाशेऽपि तदेवान्यत्रोत्पादात्, अन्यत्र चावस्थानात्, महारण्य-लग्नाग्निस्कन्धवत्। ( ख० त० टी०, 241 )

**पञ्चकुलम्**

द्वेषो मोहस्तथा रागश्चिन्तामणिसमयस्तथा।
कुला ह्येते तु वै पञ्च काममोक्षप्रसाधकाः॥ ( गु० स०, 1.4 )

**पद्मान्तकृत्**

अवाच्यात्मका धर्मा अभावनामरूपधीः।
समयः सर्वधर्माणां तेन पद्मान्तकृद्विभुः॥ ( गु० स०, 18.54 )
रागो रागोपभोगेन क्षयरागः पद्मान्तकृत्।
वागन्तकृद् भवेत्तेन समापत्त्यन्तकृत्तथा॥ ( गु० स०, 18. 59 )

**प्रज्ञाधृक्**

प्रकर्षकृतविज्ञानं यत् तत् प्रज्ञेति भण्यते।
संस्कारचेतनाधार्यं प्रज्ञाधृगिति कथ्यते॥ ( गु० स० 18.43 )

**प्रज्ञान्तकृत्**

अविज्ञानात्मका धर्माः परमार्थविशुद्धितः ।
समयः सर्वचित्तानां तेन प्रज्ञान्तकृज्जिनः ॥ ( गु० स०, 18.53 )

दोषो दोषोपभोगेन क्षयदोषः प्रज्ञान्तकृत् ।
चित्तान्तकृद् भवेत्तेन तथा क्लेशान्तकृद् भवेत् ॥ ( गु० स०, 18.58 )

**प्रेरणम्**

प्रेरणं रश्मिसञ्चारं दशदिग्लोकधातुषु । ( गु० स०, 18.108 )

**बन्धनम्**

रश्मिना सर्ववज्राणां सर्ववज्राणि तत्पदे ।
संहृत्य पिण्डरूपेण बन्धो बन्धनमुच्यते ॥ ( गु० स०, 18.109 )

**बीजाक्षरपदम्**

बीजाक्षरपदं प्रोक्तं त्रिवज्राक्षरमक्षरम् । ( गु० स०, 18.107 )

**बुद्धपुत्रः**

बुद्धपुत्रोऽप्यसावुच्यते । तत्कथम् ? कदाचिद् बोधिसत्त्वरूपत्वात्, बोधिसत्त्वानां बुद्धसुतत्वात् । ( ख० त० टी०, 233 )

**बुद्धस्वभावः**

बुद्धश्चित्तबाह्यश्चित्तग्राह्यः स स्वभावोऽस्येति । बुद्धस्वभावः खलु नैव संदृश्यते, नोपलभ्यते, न कल्प्यते, नापि विज्ञानस्य स्वभावभूत आकारः, एकानेकविचारासत्त्वात् । ( ख० त० टी०, 234 )

**बोधिचित्तम्**

अनादिनिधनं शान्तं भावाभावक्षयं विभुम् ।
शून्यताकरुणाभिन्नं बोधिचित्तमिति स्मृतम् ॥ ( गु० स०, 18.37 )

**बोधिः**

तेन तस्य न पापं स्यात् पुण्यं नैव तथैव च ।
यस्य न पुण्यं पापोऽस्ति तस्य बोधिः प्रगीयते ॥ ( गु० स०, 18.198 )

**भाः ( देवी )**

पत्युरङ्कगतत्वान्नित्यं भासत इति भाः। चतुर्देवीसंग्रहरूपत्वाद्वाऽत्यर्थं भासत इति भाः। ( ख० त० टी०, 240 )

इन्द्रनीलनिभो जटामुकुटी नवयौवनो विचित्रवस्त्राभरणो वज्रपर्यङ्कनिषण्णः स्वाभभा-देवीमुभाभ्यां भुजाभ्यां विश्ववज्रविश्ववज्राङ्कघण्टाधराभ्यां परिष्वज्य व्यवस्थितो वीरश्शृङ्गाररसः। ( ख० त०, टी०, 245 )

**भ्रान्तिवज्रः**

स्वप्नोपमेषु धर्मेषु अनुत्पादस्वभाविषु।
स्वभावशुद्धतत्त्वेषु भ्रान्तिवज्रः प्रगीयते ॥ ( गु० स०, 15.119 )

**मण्डलम्**

भगं मण्डलमाख्यातं बोधिचित्तं च मण्डलम्।
देहं मण्डलमित्युक्तं त्रिषु मण्डलकल्पना ॥ ( गु० स०, 18.99 )

**मननम्**

प्रतीत्योत्पद्यते यद्यदिन्द्रियैर्विषयैर्मनः।
तन्मनो मननं ख्यातं कारकत्राणनार्थतः ॥ ( गु० स०, 18.69–70 )

**मन्त्रचर्या**

पालनं सर्ववज्रैस्तु मन्त्रचर्येति कथ्यते।
स्वकस्वकस्वभावं तु विचार्य मनसा हृदि ॥ ( गु० स०, 18.71 )

**मन्त्रम्**

…… ……सर्ववाङ्मन्त्रमुच्यते।
मन्त्रं मन्त्रमिति प्रोक्तम् ॥ ( गु० स०, 18.74 )

**महासाधनम्**

आत्मवन्मण्डलसृष्टिर्महासाधनमुच्यते। ( गु० स०, 18.173 )
महासाधनकाले च बिम्बं बुद्धाधिपं विभुम्। ( गु० स०, 18.175 )
खभावं खमुखं शान्तं महासाधनमुच्यते। ( गु० स०, 18.179 )

**माया**

मन्त्राद्यधिष्ठानात् काष्ठादिकमसता गजादिकरूपेण प्रथमानं माया, तत्साधर्म्याद् देव्योऽपि मायाः । ( ख० त० टी०, 240 )

**मोक्षा ( देवता )**

सर्वचित्तावरणमोक्षणाद् मोक्षा । ( ख० त० टी०, 240 )
दक्षिणदले नीलवज्रबीजोद्भवा मोक्षा, नीलवर्णा । ( ख० त० टी०, 245 )

**मोहजापः**

कामार्थं विह्वलीभूतान् सर्वत्राणहितैषिणः ।
सत्त्वान् मोहपदे स्थाप्य मोहजाप इति स्मृतः ॥ ( गु० स०, 13.19 )

**मोहः**

अद्वयज्ञानधर्मेर्ष्याऽहङ्कारो मोह उच्यते । ( गु० स०, 18.49 )

**यमान्तकृत्**

अविनाशात्मका धर्मा अनुत्पादस्वभावतः ।
समयः सर्वभावानां तेनैवान्तकक्रमः ॥ ( गु० स०, 18.52 )

मोहो मोहोपभोगेन क्षयमोहो यमान्तकृत् ।
कायान्तकृद् भवेत्तेन तथा ज्ञेयान्तकृद्भवेत् ॥ ( गु० स०, 18.57 )

**योगः**

प्रज्ञोपायसमापत्तिर्योग इत्यभिधीयते ।
योनिस्वभावतः प्रज्ञा उपायो भावलक्षणम् ॥ ( गु० स०, 18.32 )

**रतिः**

रतिरत्यन्तसंभोगं सम्पदः स्त्रीसुखं परम् । ( गु० स०, 18.50 )

**रत्नजापः**

अथानुगमजापेन निःस्वभावेन चारुणा ।
विचारणं त्र्यध्वबुद्धेभ्यो रत्नजापः स उच्यते ॥ ( गु० स०, 13.16 )

**रत्नधृक्**

चित्तं रत्नमिति ख्यातमर्थैः सर्वैः समुद्भवम् ।
वेदकेन ध्रुवं वेद्यं वेदना रत्नधृङ्मनः ॥ ( गु० स०, 18.41 )

**रागजापः**

रागवज्रोद्भवं वाचं कायवाक्चित्तसंस्थितान् ।
सत्त्वान् रागपदे स्थाप्य रागजाप इति स्मृतः ॥ ( गु० स०, 13.20 )

**वज्रधृक्**

पञ्च हेतिश्च वेतिश्च वज्रमित्यभिधीयते ।
धारणं धृगिति ख्यातं विज्ञानं वज्रधृङ्मनः ॥ ( गु० स०, 18.39 )

**वज्रम्**

लक्षणं रागमासक्तिः ज्ञानोऽयं वज्रमुच्यते । ( गु० स०, 18.50 )

**वज्रयानम्**

मोहो द्वेषस्तथा रागः सदा वज्रे रतिः स्थिता ।
उपायस्तेन बुद्धानां वज्रयानमिति स्मृतम् ॥ ( गु० स०, 18.51 )

**वज्रसत्त्वः**

षण्णां चक्रवर्तिनामाद्यत्वाद् आदिबुद्धो वज्रसत्त्वः । ( ख० त० टी०, 233 )
आदिधर्मो वज्रसत्त्वः, धर्मकायात्मकत्वात् ॥ ( ख० त० टी०, 234 )
आकाशोत्पादचिह्नत्वादनादिनिधनः परः ।
सर्ववज्रमयः सत्त्वो वज्रसत्त्वः परं सुखम् ॥ ( ख० त० टी०, 235 )

**वज्राधिपतिः**

रूपवज्रादयः षट्का वज्राधिपतयः स्मृताः ।
समयवज्रादयः षट्काः पृथिव्यादिषु पञ्चकाः ॥ ( गु० स०, 18.64 )

**वज्रोदकम्**

वज्रोदकं मद्यम् ...........

धर्मः संघो वज्रोदकम्, इत्येषां तुल्यस्वभावः । वज्रोदकं हि बोधिचित्तं स एव धर्मः, आर्यमार्गत्वात् । स एव संघः, सवीर्यपुद्गलसंग्राहकत्वात् । वसादीनां च तुल्यस्वभावो बोधिचित्तमेव प्रकाशमात्रत्वात्, धर्माणामाकाराणामलीकत्वात् ।
( ख० त० टी०, 251–252 )

**वाग्जापः**

वाक्यसमयसम्बोधिः शब्दाशब्दविचारणम् ।
वाग्वज्र इति प्रोक्तो वाग्जापः स उच्यते ॥ ( गु० स०, 18.14 )

**वाङ्मण्डलम्**

वाक् प्रज्ञा, चित्तमुपायः, प्रज्ञोपाययोरद्वयीभावो वाङ्मण्डलम्, तच्च प्रज्ञाप्रधानम् । ( ख० त० टी०, 247 )

**विघ्नान्तकृत्**

निर्विकल्पात्मका धर्मा प्रकृत्या शान्तभावतः ।
समयः सर्ववज्राणां तेन विघ्नान्तकृत् प्रभुः ॥ ( गु० स०, 18.55 )

सर्वक्लेशक्षयं यत् तत् सर्वकर्मक्षयं तथा ।
सर्वावरणक्षयं ज्ञानं विघ्नान्तकृदिति स्मृतम् ॥ ( गु० स०, 18.60 )

**विद्यापुरुषः**

कायवाक्चित्तवज्रेण भेद्याभेद्यस्वभावतः ।
विद्यया सह संयुक्तो विद्यापुरुष उच्यते ॥ ( गु० स०, 18.38 )

**विद्याराजा**

भूतभौतिकविख्याता विद्याराजेति विश्रुता । ( गु० स०, 18.63 )

**शान्तिः ( देवता )**

सर्वकायोपद्रवशमनाच्छान्तिः । ( ख० त० टी०, 240 )
पूर्वदले सितवज्रबीजोद्भवा शान्तिः सितवर्णा । ( ख० त० टी० 245 )

**शून्याविवेकः**

आकाराणामस्तंगमाच्छून्यश्चासौ तत एव भेदानुपलक्षणादविवेकश्चेति शून्याविवेकः । ( ख० त० टी०, 240 )

**षडङ्गयोगः**

प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा ।
अनुस्मृतिः समाधिश्च षडङ्गो योग उच्यते ॥ ( गु० स०, 18.140 )

**सदोत्तमः**

सदोत्तम उत्तमा प्रधानदेवी सदा संयुक्ताऽस्मिन्निति सदोत्तमः । ( ख० त० टी०, 240 )

**समन्तचर्या**

सर्वचित्तेषु या चर्या समन्तचर्येति कथ्यते । ( गु० स०, 18.69 )

**समयः**

समयं विश्वसङ्काशाभिमुखं कर्मजं फलम्। ( गु० स०, 18.48 )

**असुरकन्यासमयः**

क्रूरा मानभराक्रान्ता गन्धपुष्पोपभोगजाः।
समयो वज्रपात्रालिः दुर्दान्ता वज्रभैरवाः॥ ( गु० स०, 17.22 )

**कायसिद्धिसमयः**

कायिकं त्रिविधं सर्वं कारयेद् वज्रसम्भवम्।
बुद्धकार्यकरं नित्यं सत्त्वधातोः समन्ततः॥ ( गु० स०, 17.26 )

**खविद्याधरसमयः**

कायवाक्चित्तवज्राणां मुकुटे ध्यानं विचिन्तयेत्।
त्रिवज्रसमयैः सर्वैः क्रुद्धैर्जेतुं न शक्यते॥ ( गु० स०, 17 34 )

**चित्तवज्रसमयः**

यावन्तः सर्वसमयास्त्रिवज्रकायसंस्थिताः।
प्रीणयन्ति वज्रसमयैः चित्तवज्रं न जुगुप्सयेत्॥ ( गु० स० 17.49 )

**चित्तसिद्धिवज्रसमयः**

मनोवज्रमयं सर्वं भावयेद् दृढवज्रधृक्।
एषो हि समयः प्रोक्तस्त्रिवज्राभेद्यवज्रिणाम्॥ ( गु० स०, 17.28 )

**त्रिवज्रसमयः**

कायवज्रो भवेद् ब्रह्मा वाग्वज्रस्तु महेश्वरः।
चित्तवज्रधरो राजा सैव विष्णुर्महर्धिकः॥ ( गु० स०, 17.19 )

**वज्रपूरकसमयः**

कामयेत् प्रतिदिनं वज्री चतुःसन्ध्यं यथोत्तरम्।
द्रव्यं चोपहरेन्नित्यं समयो वज्रपूरकः॥ ( गु० स०, 17.33 )

**वज्रसम्भवसमयः**

सत्त्वधातुं समासेन ध्यानवज्रेण चोदयेत्।
त्रिवज्रवन्दनाग्राग्र्यः समयो वज्रसम्भवः॥ ( गु० स०, 17.31 )

**वाक्सिद्धिसमयः**

वाक्कर्मकृतं कृत्स्नं त्रैलोक्यामलमण्डलम् ।
वाक्सिद्धिपदरम्योऽयं समयो दुरतिक्रमः ॥ ( गु० स०, 17. 27 )

**वाग्वज्रसमयः**

त्रैधातुकपथे रम्ये यावन्त्यो योषितः स्मृताः ।
कामयेद्विधिवत् सर्वा वाग्वज्रैर्न जुगुप्स्यते ॥ ( गु० स०, 17. 48 )

**शीलसमयः**

देशना कायिकी तेषां कायवज्रप्रतिष्ठिता ।
सत्त्वावतारणं शीलसमयः परमशाश्वतः ॥ ( गु० स०, 17.14 )

**श्रावकशिक्षासमयः**

दशकुलान् कर्मपथान् कुर्वन्ति ज्ञानवर्जिताः ।
हीनाधिमुक्तिकाः सर्वे समयोऽयं महाद्भुतः ॥ ( गु० स०, 17. 15 )

**सर्वतथागतकायवाक्चित्तवज्रध्यानसमयः**

वज्रसत्त्वस्य सर्वत्र कायवाक्चित्तमण्डले ।
ध्यानं त्रिवज्रयोगेन ध्यातव्यं मन्त्रजापिना ॥ ( गु० स०, 17. 30 )

**सर्ववज्रडाकिनीसमयः**

विण्मूत्ररुधिरं भक्षेद् मद्यादींश्च पिबेत् सदा ।
वज्रडाकिनीयोगेन मारयेत् पदलक्षणैः ॥
स्वभावेनैव संभूता विचरन्ति त्रिधातुके ।
आचरेत् समयं कृत्स्नं सर्वसत्त्वहितैषिणा ॥ ( गु० स०, 17.24-25 )

**सर्ववज्रधरादिकर्मिकसमयः**

भजने कायवज्रस्य बहिर्वज्रधरस्य च ।
वज्रधर्मैः सदा कार्या सूत्रोद्घाटविधि क्रिया ॥ ( गु० स० 17.35 )

**समयचतुष्टयम्**

समयचतुष्टयं रक्ष्यं वज्रसत्त्वैर्महर्द्धिकैः ।
रुधिरं शुक्रसंयुक्तं सदा भक्ष्यं दृढव्रतैः ॥
कायवाक्चित्तवज्राणां समयोऽयं महाद्भुतः ।
शाश्वतं सर्वबुद्धानां संरक्ष्यो वज्रधरादिभिः ॥

यश्चेमं समयं रक्षेद् वज्रसत्त्वो महाद्युतिः ।
कायवाक्चित्तगतं तस्य बुद्धो भवति तत्क्षणात् ॥ ( गु० सं०, 17.11-13 )
समयचतुष्टयं रक्ष्यं बुद्धैर्ज्ञानोदधिप्रभैः ।
महामांसं सदा भक्ष्यमिदं समयमुत्तमम् ॥ ( गु० स०, 17.9 )
समयचतुष्टयं रक्ष्यं वाक्यवज्रमहाक्षरैः ।
विण्मूत्रं च सदा भक्ष्यमिदं गुह्यं महाद्भुतम् ॥ ( गु० स०, 17.10 )
विण्मूत्रशुक्ररक्तानां जुगुप्सां नैव कारयेत् ।
भक्षयेद्विधिना नित्यमिदं गुह्यं त्रिवज्रजम् ॥ ( गु० स०, 17 47 )

**समाजम्**

समाजं मीलनं प्रोक्तं सर्वबुद्धाभिधानकम् । ( गु० स०, 18.24 )

**समाधिः**

प्रज्ञोपायसमापत्त्या सर्वभावान् समासतः ।
संहृत्य पिण्डयोगेन बिम्बमध्ये विभावनम् ॥
झटिति ज्ञाननिष्पत्तिः समाधिरिति संज्ञितः । ( गु० स०, 18.153-154 )
समाधिवसितामात्रे निरावरणवान् भवेत् । ( गु० स०, 18.157 )

**संवृतिः**

महाद्भुतेषु धर्मेषु आकाशसदृशेषु च ।
निर्विकल्पेषु शुद्धेषु संवृतिस्तु प्रगीयते ॥ ( गु० स०, 9.23 )

**साधनम्**

कायवाक्चित्तवज्रेणाद्वयीकरणसाधनम् । ( गु० स०, 18.172 )
साधने देवतायोगं कुर्यान्मन्त्री विधानवित् । ( गु० स०, 18.174 )
साधनं चालनं प्रोक्तं हूँफट्कारसमन्वितम् । ( गु० स०, 18.178 )

**सामान्यसेवा**

वज्रचतुष्केण सामान्यम् । ( गु० स०, 18 136 )

**सिद्धिः**

अन्तर्धानादयः सिद्धाः सामान्या इति कीर्तिताः ।
सिद्धिरुत्तममित्याहुर्बुद्धा बुद्धत्वसाधनम् ॥ ( गु० स०, 18.133 )

**सुषमा ( देवता )**

सर्वबुद्धधर्मरतिप्रापणात् सुषमा। ( ख० त० टी०, 240 )
पश्चिमदले रक्तवज्रबीजोद्भवा सुषमा पद्मरागवर्णा। ( ख० त० टी०, 245 )

**सेवा**

सामान्योत्तमभेदेन सेवा तु द्विविधा भवेत्।
वज्रचतुष्केण सामान्यमुत्तमं ज्ञानामृतेन च ॥ ( गु० स०, 18.136 )

सेवाकाले महोष्णीषं बिम्बमालम्ब्य योगतः। ( गु० स०, 18.173 )

उत्तमे ज्ञानामृते चैव कार्यं योगषडङ्गतः।
सेवा षडङ्गयोगेन कृत्वा साधनमुत्तमम् ॥
साधयेदन्यथा नैव जायते सिद्धिरुत्तमा ॥ ( गु० स०, 18 138–139 )

प्रथमं शून्यताबोधिं द्वितीयं बीजसंहृतम्।
तृतीयं बिम्बनिष्पत्तिश्चतुर्थं न्यासमक्षरम् ॥
एभिर्वज्रचतुष्केण सेवा सामान्यसाधनम्। ( गु० स०, 18.137-138 )

**स्त्रीभुवनम्**

स्त्रीति योगिन्यस्तासां भुवनं मण्डलं स्त्रीभुवनम्। ( ख० त० टी०, 233 )

**स्वाभाविककायः**

बुद्धधर्माणां काय आश्रय इति कृत्वा स्वाभाविकः काय इत्युच्यते, तथताप्रकाशयोः स्वरूपेऽत्यन्तमवस्थानात् ( ख० त० टी०, 231 )



# क्रियासमुच्चय एवं वज्रावली

—व्रजवल्लभ द्विवेदी—

[ शतपिटक सिरीज ( संख्या 237 और 239 ) में प्रकाशित क्रियासमुच्चय के कर्ता जगद्दर्पण और वज्रावली के कर्ता अभयाकरगुप्त का परिचय देकर यहां इन दोनों ग्रन्थों में उद्धृत अन्य ग्रन्थों और ग्रन्थकारों की नामावली देते हुए उनकी समीक्षा प्रस्तुत की गई है और क्रिया-समुच्चय में दिये गये कुछ सिद्धों के ध्यान-श्लोकों के प्रसंग में अपभ्रंश और संस्कृत भाषा में साहित्य प्रस्तुत करने वाले सिद्धाचार्यों का परिचय दिया गया है । ]

शतपिटक सिरीज के 237 वें भाग के रूप में आचार्य जगद्दर्पण कृत क्रियासमुच्चय का तथा 239 वें भाग के रूप में अभयाकरगुप्त कृत वज्रावली का सन् 1977 में डॉ० लोकेशचन्द्र ने प्रकाशन किया था। नेपाल आदि में उपलब्ध इन दोनों ग्रन्थों के किसी एक हस्तलेख की ये फोटो-प्रतियां हैं। इन दोनों ग्रन्थों में अपने पूर्ववर्ती अनेक ग्रन्थ-ग्रन्थकारों और मत-मतान्तरों का उल्लेख मिलता है। इनमें से ग्रन्थ-ग्रन्थकारों के वचनों को "लुप्त बौद्ध-वचन संग्रह" में इकट्ठा कर दिया गया है। वहां उपलब्ध अन्य महत्त्वपूर्ण सूचनाओं को इकट्ठा करने का एक लघु प्रयास यहां किया जा रहा है।

क्रियासमुच्चय आचार्यक्रियासमुच्चय अथवा वज्राचार्यक्रियासमुच्चय के नाम से भी प्रसिद्ध है और ग्रन्थकर्ता जगद्दर्पण दर्पणाचार्य के नाम से भी। सिद्धाचार्य दर्पण अथवा दर्पणाचार्य के और उनकी गुरुपरम्परा के विषय में "ब्ल्यू एनल्स" ( पृ० 1045 ) में कुछ अद्भुत सूचनाएं मिलती हैं, किन्तु इनके समय और स्थान के विषय में कहीं से भी कोई प्रामाणिक सूचना नहीं मिलती। इस ग्रन्थ के भोट अनुवादक[1] भारतीय और तिब्बती विद्वानों के नाम तो उपलब्ध हैं, किन्तु उनसे भी यह सूचना नहीं मिलती कि यह अनुवाद कब हुआ। यह निश्चित रूप से कहा जा सकता है कि 13 वीं शताब्दी से पहले इसका भोट अनुवाद हो चुका था, क्योंकि यह माना जाता है कि तिब्बती कंग्यूर-तंग्यूर का संकलन बुस्तोन ( 1290-1364 ) ने किया था। वज्राचार्यक्रियासमुच्चय ( सं० 3305 ) के अतिरिक्त इनके [2]कर्मयमारिपूजाविधि

1. तोहोकु-सूची में दर्पणाचार्य के तीनों ग्रन्थों की मूल लेख में दी गई संख्याओं पर इनके नाम देखे जा सकते हैं।

2. कृष्णयमारि नाम मिलता है। यमारि वर्ग में कर्मयमारि नाम की खोज अपेक्षित है।

( सं० 1993 ) और रक्तयमारिजीवतत्त्वोपदेश ( सं० 2037 ) नामक अन्य दो ग्रन्थों के भी भोट अनुवाद तोहोकु-सूची में उपलब्ध हैं। इनके अतिरिक्त अन्य किसी ग्रन्थ के हस्तलेख की अथवा अनुवाद की सूचना हमें नहीं मिलती। क्रियासमुच्चय में स्वयं ग्रन्थकार [1]नामसंगीति की योगसारावली नामक अपनी टीका का उल्लेख करते हैं। इसके विषय में भी कहीं से किसी प्रकार की सूचना हमें अब तक नहीं मिल पाई है।

इसके विपरीत वज्रावली के लेखक अभयाकरगुप्त के समय और अन्य कृतियों के विषय में हमें पर्याप्त सूचनाएं प्रामाणिक रूप से मिलती हैं। पालवंशीय राजा रामपाल के राज्य काल ( ई० 1084-1130 ) में ये विक्रमशील विश्वविद्यालय के आचार्य थे। रामपाल के राज्य शासन के 25 वें वर्ष, अर्थात् ई० 1109 में इन्होंने बुद्धकपालतन्त्र की टीका और 30 वें वर्ष, अर्थात् सन् 1114 ई० में [2]मुनिमतालंकार की रचना की थी। न्यू कैटलागस कैटलागरम् ( भा. 1, पृ. 280-281 ) में इनके लिखे 29 ग्रन्थों की सूचना मिलती है। उनके नाम इस प्रकार हैं—

1. अभयपद्धति ( बुद्धकपालतन्त्रटीका ) 1654
2. अभिषेकप्रकरण 1499
3. अभिसमयोपायिका अथवा [3]सस्वरोदयाभिसमयोपायिका ( अभयाकरगुप्त कृत वज्रावली-मण्डलोपायिका में स्मृत )
4. अष्टसाहस्रिकाप्रज्ञापारमितावृत्ति ( मर्मकौमुदी ) 3805
5. आम्नायमञ्जरी ( सम्पुटतन्त्रराज की टीका ) 1198
6. उच्छुष्मजम्भलसाधन 3266
7. उपदेशमञ्जरीनाम सर्वतन्त्रोत्पन्नोपपन्नसामान्यभाष्य
8. कालचक्रावतार 1383
9. कालचक्रोद्दान 1380

---

1. "अस्मत्कृतनामसंगीतिटीकायां योगसारावल्याम्" ( पृ० 222 )।
2. देखिये—न्यू० भा० 1, पृ० 280 तथा निष्पन्नयोगावली, उपोद्घात, पृ० 10–11; यहाँ अभयाकरगुप्त के समय आदि के विषय में डॉ० ए०एस० अलतेकर की पुस्तक 'एजुकेशन इन एंश्येन्ट इण्डिया' के आधार पर तथा अन्य उपादानों से सूचनाएँ दी गई हैं।
3. वज्रावली ( पृ० 219,248 ) और निष्पन्नयोगावली ( पृ० 28 ) में भी 'संवराभिसमयोपायिका' नाम से ही यह ग्रन्थ उद्धृत है, अतः यहाँ दिया गया सस्वरोदया० नाम ठीक नहीं लगता। 'सस्वरो' के स्थान पर 'सम्बरो' पाठ हो सकता है। तब संवर और संवरोदय की भिन्नता-अभिन्नता पर हमें विचार करना पड़ेगा।

10. गणचक्रविधि 2491
11. चक्रसंवराभिसमयोपदेश[1] 1498
12. ज्ञानडाकिनीसाधन[2] 1618
13. ज्योतिर्मञ्जरीनाम होमोपायिका[3] 3142
14. नाथकाकयोनितर्पणविधिक्रम
15. निष्पन्नयोगावली 3141
( मञ्जुवज्रादिक्रमाभिसमयसमुच्चयनिष्पन्नयोगावली नाम से कोडियर में वर्णित )
16. पञ्चक्रममतटीका ( चन्द्रप्रभा ) 1831
17. बुद्धकपालतन्त्रटीका ( अभयपद्धति ) 1654
18. बोधिपद्धति 3766
19. बोधिसत्त्वसंवरग्रहणविधि 3970
20. मञ्जुवज्रादिक्रमाभिसमयसमुच्चयनिष्पन्नयोगावली 3141
21. महाकालक्रमसंभार[4]
22. मुनिमतालङ्कार ( मैत्रेय कृत अभिसमयालङ्कार की टीका ) 3903
23. रक्तयमान्तकनिष्पन्नयोग 2036
24. वज्रमहाकालक्रोधनाथरहस्यसिद्धिभवतन्त्र
25. वज्रयानापत्तिमञ्जरी 2483
26. वज्रावलीनाम मण्डलोपायिका 3140
27. संपुटतन्त्रराजटीका ( आम्नायमञ्जरी, अभयाकरगुप्तकृत बुद्धकपालतन्त्रटीका तथा वज्रावलीमण्डलोपायिका में स्मृत ) 1198
28. सर्वतन्त्रोत्पन्नोपपन्नसामान्यभाष्य ( उपदेशमञ्जरी )[5]
29. स्वाधिष्ठानक्रमोपदेश 1500

---

1. चक्रसंवराभिसमय की यह संख्या है। चक्रसंवरमहाभिसमय और चक्रसंवराभिसमयोपदेश इससे अभिन्न ही होने चाहिये।
2. ज्ञानडाकसाधन की यह संख्या है। ज्ञानडाकिनीसाधन इससे अभिन्न ही होना चाहिये।
3. होमोपायिका ही सही नाम है। बोस सूची की 'होमायिका' छपाई की गलती हो सकती है।
4. तोहोकु-सूची में इसका उल्लेख नहीं है। बोस-सूची का 'कर्मसम्भार' नाम सही लगता है और इसीमें वहाँ के 17 से 23 संख्या तक के ग्रन्थों का समावेश किया जा सकता है।
5. टिप्पणी संख्या 4 में बताये गये नाम के अतिरिक्त 3,7,14,24 और 28 संख्या के नाम भी तोहोकु-सूची में उपलब्ध नहीं होते।

इनमें से 1. अभयपद्धति 17. बुद्धकपालतन्त्र की टीका का नाम है, और 5. आम्नाय-मंजरी 27. सम्पुटतन्त्र की टीका का। 7. उपदेशमंजरी ही 28. सर्वतन्त्रोत्पन्नोपपन्नसामान्य-भाष्य है और 15. निष्पन्नयोगावली ही 20. मंजुवज्रादिक्रमाभिसमयसमुच्चयनिष्पन्नयोगावली के नाम से भी प्रसिद्ध है। इस प्रकार 29. में में चार संख्या को घटा देने पर इनके 25. ग्रन्थ शेष रह जाते हैं।

निष्पन्नयोगावली के उपोद्घात (पृ० 9) में महाशय फणीन्द्रनाथ बोस के ग्रन्थ "इण्डियन टीचर्स आफ बुद्धिष्ट युनिवर्सिटीज" के आधार पर अभयाकरगुप्त के 24 ग्रन्थों की नामावली दी है। साधनमाला के उपोद्घात (पृ० 90-91) में डॉ० बी० भट्टाचार्य द्वारा तिब्बती तंग्युर के आधार पर तैयार की गई "बौद्ध गान ओ दोहा" में संकलित अभयाकरगुप्त के 18 ग्रन्थों की सूचो मिलती है। इनमें से पहली सूची के 16 ग्रन्थ और दूसरी सूचो के 14 ग्रन्थों का समावेश ऊपर दी गई सूची में हो जाता है। पहली (बोस) सूची के बाकी बचे आठ ग्रन्थ ये हैं—

2. श्री चक्रसंवराभिसमय
17. वज्रमहाकाल कर्मोच्चाटनाभिचारनाम
18. वज्रमहाकाल कर्मविभङ्गाभिचारनाम
19. वज्रमहाकाल कर्मकायस्तम्भनाभिचारनाम
20. वज्रमहाकाल कर्मवाक्स्तम्भनाभिचारनाम
21. वज्रमहाकाल कर्मचित्तस्तम्भनाभिचारनाम
22. वज्रमहाकाल कर्मभवशोषणाभिशापनाम
23. वज्रमहाकाल कर्माभिचारप्रतिसंजीवनशान्तिकर्मनाम

दूसरी (भट्टाचार्य) सूची के बाकी बचे चार ग्रन्थ ये हैं—

2. श्रीचक्रसंवरमहाभिसमय
8. ज्ञानडाकिनीमन्त्र
10. श्रीमहाकालसाधन
11. श्रीमहाकालान्तरसाधन

ऊपर पृ० 61 की टिप्पणी संख्या 1 में हमने बताया है कि श्रीचक्रसंवराभिसमय, श्रीचक्रसंवरमहाभिसमय और चक्रसंवराभिसमयोपदेश एक ही ग्रन्थ के ये विभिन्न नाम हो सकते हैं। वहीं टि० सं० 4 में यह भी बताया गया है कि महाकालकर्मसंभार ही सही नाम हो सकता है और उसी में बोस सूची के 17 से 23 संख्या के ग्रन्थों का समावेश किया जा सकता है। तोहोकु-सूची में इनमें से किसी का भी उल्लेख नहीं। ज्ञानडाकिनीमन्त्र ज्ञानडाकिनीसाधन का ही अंश हो सकता है। महाकालसाधन और महाकालान्तरसाधन का भी उल्लेख तोहोकु-सूची में नहीं

मिलता। इनका भी समावेश महाकालकर्मसंभार में किया जा सकता है। इस प्रकार हम कह सकते हैं कि वर्तमान समय में अभयाकर गुप्त के 25 ग्रन्थ अथवा उनके नाम हमें उपलब्ध होते हैं।

इनमें से वज्रावली का यह संस्करण हमारे सामने है। जापान में इसका परिष्कृत संस्करण तैयार किया जा रहा है, ऐसी सूचना हमें मिली है। यह आवश्यक भी है। निष्पन्न-योगावली गायकवाड़ सिरीज, बड़ोदा से (प्रथम संस्करण, सन् 1949; द्वितीय संस्करण, सन् 1972 रिप्रिन्ट) प्रकाशित हो चुका है। [1]उच्छुष्मजम्भलसाधन भी गायकवाड़ सिरीज, बड़ोदा से प्रकाशित साधनमाला के 295 संख्या के साधन के रूप में स्थान पा चुका है। पंचक्रम, बुद्ध-कपाल, सम्पुट जैसे तन्त्र-ग्रन्थों की इनके द्वारा विरचित टीकाओं के और अष्टसाहस्रिकाप्रज्ञा-पारमिता तथा मैत्रेय कृत अभिसमयालंकार जैसे महायान-शास्त्र तथा दर्शन-शास्त्र के ग्रन्थों की टीकाओं के प्रकाशन से इनके व्यक्तित्व और कृतित्व का सही मूल्यांकन हो सकता है।

उक्त ग्रन्थों में से प्रस्तुत वज्रावली में ग्रन्थकार ने अपने आम्नायमंजरी, ज्योतिमंजरी, निष्पन्नयोगावली और (संवर)[2]अभिसमयोपायिका नामक ग्रन्थों को उद्धृत किया है। स्पष्ट है कि वज्रावली की रचना से पहले इन ग्रन्थों की रचना हो चुकी थी। आम्नायमंजरी (सम्पुटतन्त्रराजटीका) का उल्लेख बुद्धकपालतन्त्र की टीका अभयपद्धति में मिलता है और ऊपर बताया गया है कि इस टीका की रचना ई० 1109 में हुई थी। अतः हम कह सकते हैं कि बुद्धकपालतन्त्र की टीका के बाद सम्पुटतन्त्र की टीका आम्नायमंजरी की और उसके बाद वज्रावली की रचना ग्रन्थकार ने की। स्पष्ट है कि[3] वज्रावली ग्रन्थकार की पूर्ण परिपक्वावस्था की कृति है।

---

1. तोहोकु-सूची में ऊपर दी गई 3266 संख्या के अतिरिक्त 3613 और 3743 संख्या पर भी उच्छुष्म-जम्भलसाधन का उल्लेख है। इन तीनों साधनों का क्रम भिन्न है। इनमें से कौन सा साधन प्रकाशित हुआ है, इसकी परीक्षा करनी होगी।
2. वज्रावली (पृ० 219,248) में संवराभिसमयोपायिका के नाम से ही इस ग्रन्थ को अपनी कृति बताते हुए उद्धृत किया गया है।
3. वज्रावली में ग्रन्थकार ने निष्पन्नयोगावली को चार बार (पृ० 14,117,251,256) और निष्पन्न-योगावली में वज्रावली को दो बार (पृ० 4,7) उद्धृत किया है। इस प्रकार ये दोनों ग्रन्थ परस्पर एक दूसरे में उद्धृत हैं। एक ही ग्रन्थकार द्वारा लिखित इस तरह के ग्रन्थों के पूर्वापरीभाव का निश्चय कर पाना कठिन हो जाता है। ग्रन्थकार का बुद्धिगत कालक्रम "वर्तमानसामीप्ये वर्तमानवद् वा" (3.3.131) पाणिनि के इस नियम के अनुसार बाह्य कालक्रम को बाधित कर देता है। भविष्य के लिये वर्तमान का और वर्तमान के लिये भूत का प्रयोग कुछ परिस्थितियों में मान्य माना जाता है। अथवा यदि हम ऐसे ग्रन्थों के बिभिन्न प्रकरणों में कालक्रम का तारतम्य बैठाने का प्रयत्न करें, तो संभव है, यह पता चल जाय कि ऐसी स्थिति में ग्रन्थकार द्वारा किस ग्रन्थ का कौन सा प्रकरण पहले लिखा गया और कौन सा बाद में।

हम यहाँ क्रमशः उक्त दोनों ग्रन्थों में स्मृत ग्रन्थ-ग्रन्थकारों और मत-मतान्तरों का अकारादि क्रम से उल्लेख स्थाननिर्देश पूर्वक कर रहे हैं—

## क्रियासमुच्चय



1. हेवज्रतन्त्र ( 1.11.12 ) में द्वादश कल्पों में विभक्त कुरुकुल्लासाधन का उल्लेख है। इस प्रसंग को टीकाकार कृष्णपाद ने इस प्रकार स्पष्ट किया है—"वश्यकर्मणि कुरुकुल्ला विशिष्यते। तस्याः साधनं संक्षिप्तम्। यत् पूर्वमुद्दिष्टं तद् विस्तरेणोद्दिष्टम् उक्तं द्वादशभिः कल्पैर्विस्तीर्णहेवज्रे" ( पृ० 42 )। कृष्णपाद की इस उक्ति से स्पष्ट होता है कि प्रस्तुत हेवज्रतन्त्र की रचना से पहले कोई विस्तीर्ण हेवज्रतन्त्र विद्यमान था, जिसमें 12 कल्पों ( प्रकरणों ) में विस्तार से कुरुकुल्ला का साधन बताया गया था।

## वज्रावली

## समीक्षा

इन दोनों सूचियों में अनेक ग्रन्थों और ग्रन्थकारों के नाम और उनके वचन एक जैसे मिलते हैं। केवल नाम ही नहीं, "प्रवचनम्, बहुविदः, भगवता" आदि के साथ उद्धृत वचन भी एक सरीखे हैं। इतना ही नहीं, क्रियासमुच्चय का पृ० 107 से 159 तक का पूरा प्रकरण वज्रावली में भी ( "अपरे च" पृ० 86 से लेकर "विज्ञाप्य ध्यायेज्जपेच्च" पृ० 150 ) आनुपूर्वी से मिल जाता है। इस तरह की आनुपूर्वी अन्य स्थलों पर भी मिल सकती है। इससे स्पष्ट हो

जाता है कि यह पूरी सामग्री एक ने दूसरे से अथवा दोनों ने किसी तीसरे ग्रन्थ से उधार ली है। क्रियासमुच्चय में उद्धृत अनेक ग्रन्थ-ग्रन्थकारों के वचनों को वज्रावली में भी उद्धृत किया गया है, किन्तु क्रियासमुच्चय में अभयाकरगुप्त के द्वारा विशेष रूप से उद्धृत उसके किसी भी ग्रन्थ का उद्धरण अथवा नाम नहीं मिलता। हम सोच सकते हैं कि क्रियासमुच्चय की रचना वज्रावली से पहले हुई होगी। दोनों ही ग्रन्थों में कालचक्रतन्त्र की टीका विमलप्रभा का उल्लेख मिलता है। इससे जगद्दर्पण की भी पूर्वकाल सीमा निर्धारित हो जाती है कि विमलप्रभाकार पुण्डरीकपाद के बाद ही इनका स्थितिकाल मानना होगा।

निष्पन्नयोगावली, उपोद्घात, पृ० 11 की टिप्पणी में डॉ० राधाकुमुद मुखर्जी के ग्रन्थ "एंश्येन्ट इण्डियन एज्यूकेशन" (पृ० 593) को उद्धृत करते हुए उनके इस कथन पर शंका उठाई गई है कि अभयाकरगुप्त मगध पर हुए प्रथम तुरुष्क आक्रमण के प्रत्यक्ष द्रष्टा थे। इस पर हम पाठकों का ध्यान इस बात पर आकृष्ट करना चाहते हैं कि म्लेच्छों के आक्रमण की चर्चा विमलप्रभाकार [1]पुण्डरीकपाद भी करते हैं, जो कि इनके पूर्ववर्ती हैं। कालचक्रतन्त्र का आविर्भाव [2]शम्भल देश में हुआ था और तिब्बती प्रमाणों के आधार पर इस देश की स्थिति आज के अफगानिस्तान और कश्मीर के आस-पास मानी जाती है। संभव है विमलप्रभाकार पुण्डरीकपाद वहीं के हों और उनके समय में वहाँ यह आक्रमण हुआ हो। यह सोचना भी सही हो सकता है कि इस तरह के आक्रमण से उत्पीड़ित होकर ही अभयाकरगुप्त कश्मीर से मगध चले आये हों। अभिनवगुप्त के समान अभयाकरगुप्त भी कश्मीरी आचार्य थे, इसमें किसी प्रकार का सन्देह नहीं रहना चाहिये। ऐसी स्थिति में डॉ० मुखर्जी के उक्त कथन में मात्र इतना ही संशोधन करना होगा कि अभयाकरगुप्त के समय मगध पर नहीं, कश्मीर या अफगानिस्तान के उस क्षेत्र पर तुरुष्कों का आक्रमण हुआ, जहाँ कि उड्डियान पीठ स्थित था। इसका सत्यापन अपेक्षित है।

## सिद्धों की नामावली

क्रियासमुच्चय (पृ० 64-66) में उद्धृत—"लूयीपादोऽतिलूती शबर इह सदा काण्ड-कोदण्डहस्तः" इत्यादि श्लोकों में 1. लूयीपाद, 2. शबर, 3. वीणापाद, 4. कर्णपा, 5. कुद्दाल, 6. विरूपा, 7. डोम्बी, 8. कम्बली, 9. दारिक, 10. गुंडुरी, 11. इन्द्रभूति, 12. कुकुरीपाद, 13. कृष्ण, और 14. नागार्जुन का नाम मिलता है। ऐसा लगता है कि ये इन सिद्धों की कुछ

1. प्रो० जगन्नाथ उपाध्याय द्वारा सम्पादित कालचक्रतन्त्र की विमलप्रभा टीका के संस्करण का पुरोवाक् (पृ० 14) तथा कालचक्रतन्त्र (1.150-170) भी देखिये।

2. 'धीः' अंक 7, पृ० 93 देखिये।

विशेषताओं को बताने वाले ध्यान श्लोक हैं। ये श्लोक वज्रावली में नहीं उपलब्ध हुए। इस तरह के वचनों की खोज होनी चाहिये। इनसे हम सिद्धों के विषय में अधिक प्रामाणिक जानकारी हासिल कर सकते हैं। हमारा विचार है कि अनेक सिद्धाचार्यों ने अपभ्रंश के साथ संस्कृत भाषा में भी अपनी रचनाएँ प्रस्तुत की हैं। दोहाकोश और चर्यागीतिकोश की टीकाओं में तथा अन्यत्र भी ऐसे वचन उपलब्ध होते हैं और इनका [1]संकलन "लुप्त बौद्ध वचन संग्रह" में किया भी गया है।

ऊपर कुछ सिद्धाचार्यों के नाम उल्लिखित हैं। दोहाकोश, चर्यागीतिकोश और उनकी टीकाओं में भी अनेक सिद्धाचार्यों के नाम और उनकी रचनाएँ उल्लिखित हैं। इनकी वहाँ अकारादि क्रम से सूची नहीं दी गई है, अथवा दी गई सूची अपूर्ण है। प्रसंग-प्राप्त इस सूची[2] को देकर हम इस निबन्ध को पूरा करना चाहते हैं—

1. अद्वयवज्रपाद ( दोहाकोश-व्याख्याकार, पृ० 148 )।
2. आर्यदेवपाद ( 31वीं चर्यागीति के रचयिता )।
3. इन्द्रभूतिपाद* ( दो० को० व्या, पृ० 92 )।
4. कङ्कणपाद ( 44वीं चर्यागीति के रचयिता )।
5. कम्बलाम्बरपाद* ( 8वीं चर्यागीति के रचयिता )। कम्बलाचार्य, दो० को० व्या० पृ० 126, यहाँ उद्धृत संस्कृत के सभी वचन कम्बलपाद की आलोकमाला में उपलब्ध हैं।
6 कुक्कुरीपाद* ( 2,20,48 चर्यागीतियों के कर्ता )।
7. कृष्णाचार्यपाद* ( 7,9–13,18,19,24,36,40,42,45 च० गी० के कर्ता )। काह्न, काह्नु, काह्णपाद, कृष्णवज्रपाद, कृष्णाचार्य आदि विभिन्न नामों से इनको संबोधित किया गया है। टीकाकार ने सर्वत्र ( पृ० 2–3,7,8,11,14,15,21,28,29,36,57,70,91 ) कृष्णाचार्यपाद के नाम से इनके अपभ्रंश भाषा के वचनों को उद्धृत किया है और

---

1. क्रियासमुच्चय और वज्रावली में उपलब्ध अपभ्रंश वचनों का संग्रह 'धीः' के पांचवें अंक में किया गया है।

2. इस सूची में क्रियासमुच्चय के ऊपर उद्धृत 14 सिद्धाचार्यों में से कर्णपा और कुद्दाल को छोड़कर बाकी 12 सिद्धाचार्यों के नाम आये हैं। इनको यहाँ तारांकित कर दिया गया है। कुद्दालपाद का अचिन्त्याद्वयक्रमोपदेश प्रकाशित हो चुका है। आर्यदेव, इन्द्रभूति, कम्बलपाद, कृष्णपाद, केरलीपाद, घण्टा-पाद, चन्द्रगोमिपाद, ज्ञानपाद, दउड़ीपाद, दारिकपाद, धोकड़िपाद, नागबुद्धिपाद, नागार्जुनपाद, रतिवज्र, वज्रगर्भपाद, वज्रपाणि, विरूपाक्षपाद, विलासवज्रपाद, शाक्यमित्रपाद, समयवज्रपाद और सरहपाद के संस्कृत वचनों का संग्रह "लुप्त बौद्ध वचन संग्रह" में इनके संक्षिप्त परिचय के साथ दिया गया है।

पृ० 120 पर इनको जालन्धरिपाद का शिष्य बताया है। पृ० 18 पर इनका दोहाकोश उद्धृत है। डॉ० पी० सी० बागची ने मेखला टीका के साथ इसका प्रकाशन किया है।

8. गुण्डरीपाद* ( 4 थी चर्यागीति के रचयिता )।
9. चर्या( गीति )पाद (च० को० व्या०, पृ. 25, 63 पर अपभ्रंश वचन उद्धृत )।
10. चाटिल्लपाद ( 5 वीं चर्यागीति के कर्ता )।
11. जयनन्दीपाद ( 46 वीं चर्यागीति के कर्ता )।
12. जालन्धरपाद ( च० को० व्या०, पृ० 118-120 ) यहाँ कृष्णाचार्य पाद ने इनकी साक्षी दी है और टीकाकार ने इनको कृष्णपाद का गुरु माना है।
13. डोम्बीपाद* ( 14 वीं चर्यागीति के रचयिता )।
14. ढेण्ढणपाद ( 33 वीं चर्यागीति के कर्ता )।
15. तन्त्रीपाद ( 25 वीं चर्यागीति के रचयिता )।
16. ताडकपाद ( 37 वीं चर्यागीति के निर्माता )।
17. तिल्लोपाद ( च० को० व्या०, पृ० 132 पर अपभ्रंश वचन उद्धृत )। इनका दोहाकोश पंजिका टीका के साथ डॉ० पी० सी० बागची द्वारा सम्पादित है।
18. दउडीपाद ( च० को० व्या०, पृ० 40, 43, 91. 126 133 पर संस्कृत के अनेक वचन उद्धृत )।
19. दारिकपाद* ( 34 वीं चर्यागीति के गायक )। स्वयं चर्यागीतिकार तथा टीकाकार ( पृ० 112-114 ) के अनुसार ये लूयीपाद के शिष्य हैं।
20. धामपाद ( 47 वीं चर्यागीति के कर्ता )।
21. धोकड़िपाद ( च० को० व्या०, पृ० 114 पर संस्कृत श्लोक उद्धृत )।
22. नड( नारो )पाद ( सेकोद्देशटीकाकार, वहीं पृ० 74 देखिये।
23. नागार्जुनपाद* (च० को० व्या०, पृ० 3, 25, 27-28, 31-32,43,45-46 88, 97 में संस्कृत वचन उद्धृत )। यहां पृ० 3 पर इनका वज्रजाप, पृ० 27-28,45-46 पर अप्रतिष्ठान-प्रकाश नामक ग्रन्थ और दो० को० व्या०, पृ० 144 पर युगनद्धक्रम उद्धृत है।
24. बोधिपाद ( च० को० व्या०, पृ० 82 पर संस्कृत वचन उपलब्ध है )।
25. भादेपाद ( 35 वीं चर्यागीति के उद्‌गाता )। गुह्यादि-अष्टसिद्धिसंग्रह में कुद्दालपाद का अचिन्त्याद्वयक्रमोपदेश प्रकाशित हुआ है। कुद्दालपाद भद्रपाद को अपना गुरु मानते हैं। वहाँ ( श्लो० 88-89 ) इन्होंने अपनी गुरु-परम्परा इस प्रकार दी है—परमाश्व, वीणापाद, इन्द्रभूति, लक्ष्मी, विलासवज्र, गुण्डेरी, पद्माचार्य, धर्मपाद और भद्रपाद। देखिये—उपोद्‌घात, पृ० 18।

26. भुसुकपाद ( 6,21,23,27,30,41,43,49 संख्या की चर्यागीतियाँ )। च० को० व्या०, पृ० 152 पर शान्तिदेव के बोधिचर्यावतार का वचन इनके नाम से उद्धृत है। भुसुकपाद को शान्तिदेव से अभिन्न माना जाता है। शान्तिपाद देखिये।

27. महीधरपाद ( 16 वीं चर्यागीति के गायक )।

28. लूयीपाद* ( 1,29 चर्यागीति के कर्ता )। टीकाकार (पृ० 5) ने इनको आदिसिद्धाचार्य लूयीपाद कहा है। यहीं ( पृ० 112-114 ) दारिकपाद इनको अपना गुरु मानते हैं।

29. विरुवापाद* ( तीसरी चर्यागीति के रचयिता )। पृ० 53 पर टीकाकार विरूपाक्षपाद के संस्कृत श्लोक को उद्धृत करते हैं।

30. वीणापाद* ( 17 वीं चर्यागीति के गायक )।

31. शबरपाद* ( 28,50 चर्यागीति )। काण्हपाद ने अपने दोहाकोश ( पृ० 44 ) में सबर मुनि के नाम से इनको स्मरण किया है। वहीं ( पृ० 51 ) ये सबरपा के नाम से भी स्मृत हैं।

32. शान्तिपाद ( 15,26 चर्यागीतियाँ )। च० को० व्या०, पृ० 130 के अनुसार बोधिचर्यावतारकार शान्तिदेवपाद से ये अभिन्न हैं। भुसुकपाद भी देखिये।

33. सरहपाद (22,32,38,39 चर्यागीतियाँ)। च० को० व्या०, पृ० 4 पर इनके प्रबन्ध नामक संस्कृत ग्रन्थ का उल्लेख मिलता है। इसके अतिरिक्त यहाँ पृ० 17,24,60,66,69,74,80, 82,84,85,90,94,101,110,114,116,129,133,143,146,152,156,158,160,164,165 पर अनेक अपभ्रंश और संस्कृत के वचन मिलते हैं। सरहपाद का दोहाकोश प्रकाशित हो चुका है।

बस अभी इतना ही लिखकर आगे का काम हम विज्ञ पाठकों के ऊपर छोड़ रहे हैं।

# मण्डल-नृत्यों की कुछ मुद्रायें

—जनार्दन पाण्डेय—

[ 'धीः' के अंक 4,5,6,8 में 'बौद्ध तन्त्रों में देवताओं के स्वरूप" शीर्षक से विभिन्न देवताओं के स्वरूप विविध ग्रन्थों से उद्धृत कर दिये गये हैं। आगे भी दिये जायेंगे। इनमें कुछ ऐसे पारिभाषिक शब्द आये हैं, जिनको प्रत्येक व्यक्ति समझ नहीं पाता। जैसे—आलीढ़, प्रत्यालीढ़, सलील, सत्त्वपर्यङ्क, वज्रपर्यङ्क, पताकाभिनय आदि। ये वस्तुतः मुद्रायें हैं और इनके लक्षण आचार्य अभयाकर गुप्त ने वज्रावली में तथा जगद्दर्पण ने क्रियासमुच्चय में मण्डलनृत्य के प्रसङ्ग में दिये हैं। देवताओं के स्वरूप-निरूपण में भी प्रायः इन पदों का उसी अर्थ में प्रयोग किया गया है। अतः इन मुद्राओं को हम वज्रावली तथा क्रियासमुच्चय से उद्धृत कर यहाँ दे रहे हैं। इनका अर्थ समझ लेने से देवता के स्वरूप को समझने में सुविधा होगी।

इसमें पृष्ठसंख्या शतपिटक सीरीज में प्रकाशित वज्रावली तथा क्रियासमुच्चय से दी गई है।]

**आसन**

**वज्रपर्यङ्कः**

दक्षिणजङ्घोरुमध्ये वामपादं न्यस्य तदुपरि वामजङ्घोरुमध्ये दक्षिणं न्यसेदिति वज्रपर्यङ्कः।

**सत्त्वपर्यङ्क**

वामोरूपरि दक्षिणपादाभिन्यस्य वामं दक्षिणोरुतले स्थापयेदिति सत्त्वपर्यङ्कः।

**पद्मासन**

दक्षिणजङ्घायां वामजङ्घां कृत्वावनतं जानुद्वयं कुर्यादिति पद्मासनम्।

**वीरासन**

वामचरणेनार्धपर्यङ्कमाबध्य तत्समोऽर्द्धदक्षिणजानु ऊर्ध्वं प्रगुणं स्थापयेदिति वीरासनम्। केचित्तु वामार्धपर्यङ्कं कृत्वा तदुपरि दक्षिणजानुपतितं संस्थाप्य दक्षिणपादं वामोरुतले उत्तानं स्थापयेदिति वीरासनमिति ( वदन्ति )।

**भद्रासन**

ऋजुचरणद्वयमुच्चासनस्थो धारयेदिति भद्रासनम् ।

**सलीलासन**

दक्षिणपादं सत्त्वपर्यङ्केन संस्थाप्य वामं सलीलं प्रसारयेदिति सलीलासनम् ।

**उत्कुटकासन**

वितस्त्यन्तरितपादद्वयमासनस्थोत्कुटकस्तिष्ठेदित्युत्कुटकासनम् ।

**स्वस्तिकासन**

पादद्वयं सम्पुटीकृत्योपविशेदिति स्वस्तिकासनम् ।
( वज्रावली, पृ० 31-32 )

**पद या स्थानक**

**आलीढपद**

वामजङ्घामाकुञ्च्य दक्षिणचरणं पञ्चवितस्त्युत्तरेण सलीलं प्रगुणं स्थापये-दित्यालीढपदम् ।

**प्रत्यालीढपद**

दक्षिणजङ्घामाकुञ्च्य वामं स्थापयेदिति प्रत्यालीढम् ।

**वैशाखपद**

षड्विंशत्यङ्गुलायामं बाह्यचरणाज(त्क)नीयकं शुद्धजानुद्वयवैशाखं वैशाखपदम् ।

**मण्डलपद**

एवमेव हस्तद्वयान्तरं हंसपक्षाकारं मण्डलपदम् ।

**समपद**

परस्परचरणद्वयाङ्गुल्याक्षेपात् समपदम् ।

**जातपद**

चतुरङ्गुलोत्तरं पार्ष्णिद्वयं वामपादं प्रगुणं कृत्वा दक्षिणं वितस्त्यन्तरेण तिर्यगन्तं सलीलं वैशालीतारापदं च कुर्यादिति जातपदम् ।

**प्रत्याजातपद**

तथैव दक्षिणं प्रगुणं कृत्वा वामं तिर्यग्गतं कुर्यादिति प्रत्याजातपदम् ।

**विकटपद**

समपदं कृत्वा वितस्तित्रयान्तरेण दक्षिणपादं वामस्याग्रतो चारयेदिति विकटपदम्।

**प्रतिविकटपद**

तथैव दक्षिणं प्रगुणं कृत्वा वामं दक्षिणस्याग्रतो वितस्तित्रयान्तरेण स्थापयेदिति प्रति-विकटपदम्।

**सम्पुटपद**

पादतनद्वयं सम्पुटं निषद्यापि कुर्यादिति सम्पुटपदम्।

**कूर्मपद**

दक्षिणचरणेन वामपादमाक्रामेदिति कूर्मपदम्।

**एकपद**

एकपादमुत्क्षिप्यैकेन भूमौ तिष्ठेदित्येकपदम्।

**भ्रमरीजालपद**

शरीरस्य समन्ततः सव्यासव्याभ्यां भ्रमणाद् भ्रमरीजालपदम्।

(वज्रावली, पृ० 25-26)

## आक्षेप

**माराक्षेप**

आलीढेन नृत्यं कृत्वा दक्षिणाभिमुखो वामतर्जनीं हृदि कृत्वा वामपार्श्वेन भूमौ पतित्वा आकाशं निरीक्षयन् सवज्रदक्षिणकरेण सर्वान् मारानाक्षिपेत्।

**आकम्पनाक्षेप**

कमलावर्तपूर्वकं नृत्यं कृत्वा वज्रमुत्थाप्य वामतर्जन्या तर्जयन् दक्षिणहस्तेन सवज्रमुद्रा-मुत्क्षिप्य समपदस्थः सलीलं वज्रपदेनाकुञ्चितं दक्षिणपादं निक्षिपेत्, सार्धतालद्वयं वामं स्थिरं कृत्वा पादौ च पक्षस्थितौ ततो जानुदक्षिणमाकुञ्च्य दण्डमुद्रां समुत्क्षिपेत्। वामतर्जन्या तर्जयन् वामोदरमवनामयेत्। वामलोचनं निमील्य वदनं भ्रामयन् मण्डले दृष्टिं विन्यस्य भृकुटिं कुर्यादित्याकम्पनाक्षेपः।

**त्रासनाक्षेप**

तथैव वज्रमुत्थाप्य समपदस्थः समपादं सार्धतालद्वयं प्रसार्य स्थापयेत्, त्र्यस्रौ च पादौ कुर्यात्। अग्रतः कराघातं कृत्वा दण्डमुद्रामुत्क्षिप्य वीक्षेत तर्जनीं वामस्तने निधायेति त्रासनाक्षेपः।

### संक्षोभणाक्षेप

तथैव वज्रोत्थानमुद्रां कृत्वा समपदस्थितो दण्डमुद्रामुत्क्षिप्य दक्षिणाक्षि निमील्य वामचक्षुषा स्तनेन तर्जनीं पश्येत्, वामवज्रपदं कृत्वा दक्षिणजान्वाकुञ्च्य वामपादमुत्क्षिप्य सरोषः सहसा वामेन भ्रमेच्चक्रवत्, पुनस्तं पादमाकुञ्च्य प्रत्यालीढेन स्थापयेत् स्थिरं पादौ पक्षस्थितौ कृत्वेति संक्षोभणाक्षेपः।

### विमोहनाक्षेप

तथा वज्रोत्थानं कृत्वा समपदस्थो दण्डमुद्रामुत्क्षिप्य तर्जनीस्तने वामे नेत्रेण पश्येत। वामजान्वाकुञ्च्य दक्षिणवज्रपदं कृत्वा वाममुत्क्षिप्य सहसैव दक्षिणेन भ्रमेत्। ततः स्थापयेत् पातितपादमाकुञ्चितस्थितं त्र्यस्रं च कृत्वा दक्षिणं पक्षस्थितं कृत्वाऽऽलीढेन स्थापयेदिति विमोहनाक्षेपः।

### विशेषेण क्षिप्राक्षेप

अयमेव वामपादेन परिवर्त्य पुनरग्रतः कराघातं कृत्वा दण्डं पुनरुत्क्षिपेदिति विशेषेण क्षिप्राक्षेपः।

### व्याकृतास्याक्षेप

विमोहनाक्षेप एव व्याकृतास्याक्षेपः, किन्तु मुखं प्रसार्य घण्टालाननाकारेण जिह्वामवस्थाप्य चक्रवच्चङ्क्रमेदिति।

### केलीकिलोनाक्षेप

तथैव वज्रमुत्थाप्य तालमात्रान्तरितं पादद्वयं कृत्वा त्र्यस्रं कुर्यात्। दक्षिणजानु किञ्चिदाकुञ्चयेद् वामजानु नामयेत्। स्तनं वामोदरभागं च नामयेत्। स्तने तर्जनी। दोर्दण्डविक्षेपानन्तरं दण्डे दृष्टिनिपाताद् गमिताननः केलीकिलोनाक्षेपः।

### महाकेलिकिलोनाक्षेप

स एव महाकेलीकिलोनाक्षेपो यदा दृष्टिर्दण्डस्थिता दक्षिणस्कन्धदेशेन स्वपृष्ठे नीयते निमीलितवामचक्षुः क्रुद्धः पादविक्षेपं कुर्वाणः।

## वज्रमुद्रा

### वज्रोत्कर्ष

वामं गवं दक्षिणेन हृदि वज्रमुत्कर्षयेदिति वज्रोत्कर्षः।

